# पूजाविधिः

## शिवपञ्चायतन-पूजा-पद्धतिः
## लघु-पूजा-पद्धतिश्च



तत्त्वदर्शन प्रकाशनम्, शृङ्गगिरिः

# पूजाविधिः

## शिवपञ्चायतन - पूजा - पद्धतिः
## लघु - पूजा - पद्धतिश्च

(श्रीगणेशाथर्वशीर्षं, श्रीगणेश सूक्तं, श्रीरुद्रं, चमकं, पुरुषसूक्तं,
दुर्गासूक्तं, श्रीसूक्तं, महानारायणोपनिषत्, आदित्यशिवोपासन मन्त्राः,
अभिषेकोपयुक्त मन्त्राः, नीराजन मन्त्राः, मन्त्रपुष्पम् इत्यादि)

संकलनकर्ता
सि. वि. गिरिधरशास्त्री
शृङ्गगिरिः

तत्त्वदर्शन प्रकाशनम्
शृङ्गगिरिः ५७७१३९
(कर्नाटक)

# निवेदनम्

दक्षिणाम्नाय शृङ्गगिरि श्री शारदापीठाधीश्वराणां जगद्गुरुशङ्कराचार्याणां परमपूज्यानां श्री श्री श्री भारतीतीर्थ महास्वामिपादानां परमानुग्रहेण श्री शिव-पञ्चायतनपूजापद्धतिः "पूजाविधिः" नाम्ना मुद्रितासीत्। आस्तिकमहाजनैः अत्यादरेण स्वीकृतोऽयं ग्रन्थः सम्पूर्णतया विक्रीतोऽभूत्। इदानीं तस्यैव परिष्कृतां आवृत्तिं प्रकटयामः।

ग्रन्थेऽस्मिन् प्रायशः श्री शृङ्गगिरि शारदापीठस्य सम्प्रदायमनुसृत्य विशिष्टेषु पूजासन्दर्भेषु प्रयुज्यमानाः मन्त्राः संयोजितास्सन्ति। आस्तिकानां पूजनासक्तानां कृते अयमुपकाराय भविष्यतीति विश्वसिमः। अत्रस्थानां मन्त्राणामभ्यासः वेदविदां मार्गदर्शने करणीयः।

अस्य ग्रन्थस्य सङ्कलनं कृतवद्भ्यः श्री सि. वि. गिरिधरशास्त्रि महाभागेभ्यः, परिष्करणे दत्तसहकारेभ्यः वे. ब्र. श्री नरहरिसुब्रह्मण्यभट्टमहोदयेभ्यः, मुद्रणकार्ये कृतसाहाय्येभ्यः श्री एस्. वि. नारायणन् महाशयेभ्यः सादरमभिनन्दनं समर्पयामः।

ग्रन्थमिमं चारुरूपतया मुद्रितवद्भ्यः श्री बि. एन्. नटराजवर्येभ्यः तेषां सहकारिभ्यश्च वयं नितरां कार्तज्ञ्यं प्रकटयामः।

मार्ति सुब्रह्मण्यम्
तत्त्वदर्शन प्रकाशनम्
विद्यारण्यपुरं, शृङ्गगिरिः

श्री श्री जगद्गुरु शङ्कराचार्य महासंस्थानम्, दक्षिणाम्नाय श्री शारदापीठम्, शृङ्गेरी

Private Secretary,
To His Holiness
Sri Jagadguru Shankaracharya
Dakshinamnaya Sri Sharada Peetham,
SRINGERI-577139 (Karnataka)
Phone : 2122

Ref. : DI/7033
Camp : Sringeri
Date : 9-10-91

Sri M. M. Subramanyam
Thathva-Darshana Prakashana
Vidyaranyapura
SRINGERI.

Dear Sri Subramanyam,

The contents of your letter were submitted at the Lotus feet of the Jagadguru with your Sashtanga Pranams.

His Holiness expressed happiness that a Publication under the name 'Thathva Darshana Prakashana' is being launched and 'Pujopayuktha Manthraha' has been taken up as the first publication.

The Gracious Blessings of the Jagadguru His Holiness Sri Bharathi Theertha Mahaswamiji are conveyed for the success of the publication.

With kind regards,

Yours sincerely,
T. Dakshinamurthy

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्नश्रीशङ्कराचार्यगुरुपरंपराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानी विद्यानगरमहाराजधानी कर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरु भूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थस्वामिगुरुकरकमलसञ्जात श्रीजगद्गुरु शृङ्गेरी श्रीभारतीतीर्थस्वामिचरणारविंदयोः साष्टांगप्रणामान् समर्पयामि ॥

*　　*　　*

यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्नविनायकाय ॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं
रत्नाकल्पोज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानम्
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम् ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुंदेन्दुशंखस्फटिकमणिनिभा भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारत्यभिधान् यतीन्द्रान् ।
विद्यानिधीन् मंत्रनिधीन् सदात्मनिष्ठान् भजे मानवशम्भुरूपान् ॥

सदात्मध्याननिरतं विषयेभ्यः पराङ्मुखम् ।
नौमि शास्त्रेषु निष्णातं चंद्रशेखरभारतीम् ॥

विवेकिनं महाप्रज्ञं धैर्यौदार्यक्षमानिधिम् ।
सदाऽभिनवपूर्वं तं विद्यातीर्थगुरुं भजे ॥

भारतीकरुणालब्धतीर्थराजतपोनिधिं
भक्तबोधप्रदं पूज्यं भारतीतीर्थमाश्रये ॥

# पूजायाः आवश्यकता



वयं मनसः अधीनाः स्मः । मनस्तु दुर्निग्रहमित्यत्र नास्ति संशयः। योगी आसन-प्राणायाम-प्रत्याहारादिभिः मनसः ऐकाग्र्यं साधयित्वा ध्यानमग्नो भवति। येषां एवं ध्याननिष्ठा दुस्साध्या, तेषां भगवतः बाह्यपूजा आवश्यिका। भगवतः सन्ति पूजाविधयः बहवः येषु पञ्चायतन-पूजाप्येका। विशिष्टेयं पञ्चायतन-पूजा श्रीमच्छङ्कर भगवत्पादाचार्यै-रुपदिष्टास्ति।

''एको देवः केशवो वा शिवो वा'' इति सत्यपि पञ्चानां देवतानां पूजा किमर्थं विहिता इति भवति प्रश्नः । शिवस्य, शक्तेः, सूर्यस्य, गणपतेः विष्णोश्च उपासनात् देवेषु भेदबुद्धिः निरस्यते, निर्गुणपरब्रह्मणः आराधना च भवति ।

कर्तव्यं कर्म विधिवत्करणीयम् । सत्स्वपि पूजाविधानेषु बहुषु, षोडशोपचार पूजाविधानं विशेष फलप्रदम् । एवं इह जन्मनि परमेश्वराराधनेन सर्वेपि श्रेयांसि प्राप्तुं, भवसागरं तीर्त्वा भगवता ऐक्यमासाद्य पुनर्जन्मरहिताश्च भवितुं शक्नुवन्ति ।

जगद्गुरूणां श्रीमदभिनव विद्यातीर्थ महास्वामिपादानां
तमिलु भाषोपन्यासात् उद्धृतः

# विग्रहाराधनम्



यद्यपि भगवान् सर्वव्यापी तथापि तस्य सान्निध्यं यथाविधि प्रतिष्ठापितासु आराधितासु च मूर्तिषु विशेषेण वरीवर्ति । तेषु समर्प्यमाणाः पूजाः प्रार्थनादयः सफला भवन्ति ।

सहस्राधिकासु देवतामूर्तिषु सतीषु को देवः समाश्रयणीयः इति केषाञ्चित् जनानां भवति संशीतिः। नास्त्यत्र विकल्पस्यावकाशः, शास्त्राणि सनातन धर्मश्च देवः एकः एवेति उद्घोषयन्ति हि । ''एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । परमाध्यक्षः सर्वभूताधिवासी साक्षी एकः केवलो निर्गुणश्च ॥'' इति खलु वेदान्ता आमनन्ति ।

देवः एकोऽपि नानारूपाणि धरते, यथा बहुषु नाटकेषु एक एव नटः नानापात्राणि निर्वहति । स्वयं हि देवः श्रीकृष्ण-राम-ईश्वर-देवी-गणपत्यादि रूपेषु प्रकटो भवति । भक्तानुग्रहार्थं सः यत् किमपि रूपं धर्तुं प्रभवति । तस्य शक्तिस्त्वपरिमिता । सः सर्वशक्तः सत्यसङ्कल्पः सर्वज्ञश्च । बाह्यरूपेषु भेदमवगन्तुं शक्यते, न अन्तश्चैतन्ये ।

श्रीमच्छङ्कर भगवत्पादाचार्यैः परमात्मनः विविधरूपेषु आराधनं उपदिष्टमस्ति । श्रेयोपपादकत्वेन श्रीमदाचार्यचरणानामुपदेशः परिपाल्यते च ।

—जगद्गुरुभिः श्रीमद्भारतीतीर्थ महास्वामिपादैः
कन्नडभाषयानुगृहीतस्य सन्देशस्यांशः ।

# परापूजा

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् ।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ १ ॥

निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च ।
निरालम्बस्योपवीतं पुष्पं निर्वासनस्य च ॥ २ ॥

निर्लेपस्य कुतो गन्धो रम्यस्याभरणं कुतः ।
नित्यतृप्तस्य नैवेद्यस्ताम्बूलं च कुतो विभोः ॥ ३ ॥

प्रदक्षिणं ह्यनन्तस्य ह्यद्वयस्य कुतो नतिः ।
वेदवाक्यैरवेद्यस्य कुतः स्तोत्रं विधीयते ॥ ४ ॥

स्वयं प्रकाशमानस्य कुतो नीराजनं विभोः ।
अन्तर्बहिश्च पूर्णस्य कथमुद्वासनं भवेत् ॥ ५ ॥

एवमेव परापूजा सर्वावस्थासु सर्वदा ।
एकबुद्ध्या तु देवेश विधेया ब्रह्मवित्तमैः ॥ ६ ॥



# विषयसूचिका

**अनुबन्धः**

श्री गुरुभ्यो नमः

# पूजाविधिः

## आचमनम्

### प्रार्थना

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात् परंब्रह्म तस्मै श्रीगुरवे नमः ॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ॥

धूमकेतुर्गणाध्यक्षो फालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेत् श्रुणुयादपि ॥

विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

## घण्टानादः

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुर्वे घण्टारवं तत्र देवताह्वान लाञ्छनम् ॥

इति घण्टानादं कृत्वा

## आसनविधिः

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया ॥
अपक्रामन्तु भूतानि पिशाचास्सर्वतो दिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे ॥
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

## प्राणायामः

प्रणवस्य परब्रह्मऋषिः, परमात्मा देवता,
दैवी गायत्री छन्दः, प्राणायामे विनियोगः ।

ओं भूः। ओं भुवः। ओगं सुवः। ओं महः। ओं जनः। ओं तपः। ओगं सत्यम् । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् ॥ ओमापोज्योती रसोमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥

## सङ्कल्पः

शुभतिथौ, शोभने मुहूर्ते, अद्य ब्रह्मणः, द्वितीये परार्धे, श्वेतवाराहकल्पे, वैवस्वतमन्वन्तरे, कलियुगे, प्रथमपादे, जम्बूद्वीपे, भरतवर्षे, भरतखण्डे, दण्डकारण्ये, गोदावर्याः दक्षिणे तीरे, शालिवाहनशके, बौद्धावतारे, रामक्षेत्रे, अस्मिन् वर्तमाने, व्यावहारिके, चान्द्रमानेन, प्रभवादि षष्ट्याः संवत्सराणां मध्ये, ....संवत्सरे, ....अयने, ....ऋतौ ....मासे, .....पक्षे, ....तिथौ, ....वासरयुक्तायां, शुभनक्षत्र, शुभयोग, शुभकरण, एवंगुणविशेषणविशिष्टायां, शुभतिथौ, मम-उपात्त समस्त-दुरित-क्षय-द्वारा श्री परमेश्वर-

प्रीत्यर्थं, अस्माकं सह कुटुम्बानां क्षेम-स्थैर्य-वीर्य-विजय-अभय-आयुरारोग्य-ऐश्वर्याभिवृद्ध्यर्थं, धर्म-अर्थ-काम-मोक्ष चतुर्विधफल पुरुषार्थ सिद्ध्यर्थं, श्री साम्बसदाशिव पञ्चायतन देवता प्रसाद सिद्ध्यर्थं, यावच्छक्ति-ध्यानावाहनादि षोडशोपचारपूजां करिष्ये ।

## लघुन्यासः

आदौ देवतीर्थे स्नात्वोदेत्य शुचिः प्रयतो ब्रह्मचारी शुक्लवासाः तस्य दक्षिणा प्रत्यग्देशे तन्मुखं स्थित्वा आत्मनि देवताः स्थापयेत् ॥

ओं प्रजनने ब्रह्मा तिष्ठतु । पादयोर्विष्णुस्तिष्ठतु । हस्तयोर्हरस्तिष्ठतु । बाह्वोरिन्द्रस्तिष्ठतु । जठरे अग्निस्तिष्ठतु । हृदये शिवस्तिष्ठतु । कण्ठे वसवस्तिष्ठन्तु । वक्त्रे सरस्वती तिष्ठतु । नासिकयोर्वायुस्तिष्ठतु । नयनयोश्चन्द्रादित्यौ तिष्ठेताम् । कर्णयोरश्विनौ तिष्ठेताम् । ललाटे रुद्रास्तिष्ठन्तु । मूर्ध्न्यादित्यास्तिष्ठन्तु । शिरसि महादेवस्तिष्ठतु । शिखायां वामदेवस्तिष्ठतु । पृष्ठे पिनाकी तिष्ठतु । पुरतः शूली तिष्ठतु । पार्श्वयोः शिवाशङ्करौ तिष्ठेताम् । सर्वतो वायुस्तिष्ठतु । ततो बहिस्सर्वतोऽग्निर्ज्वालामाला परिवृतस्तिष्ठतु । सर्वेष्वङ्गेषु सर्वा देवता यथास्थानं तिष्ठन्तु । मागं् रक्षन्तु । यजमानगं् रक्षन्तु ॥

अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः ।

मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः। श्रोत्रगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलगं हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः । मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः। आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो-रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः ।

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः ।
आराधयामि भक्त्या त्वामनुगृहाण महेश्वर ।।

आत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैः सह केतुमद्भिः ।
वाताजिरैर्बलवद्भिर्मनोजवैरायाहि शीघ्रं मम हव्याय शर्वोम् ।।

ईशानमावाहयामीत्यावाह्य ।।

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधिं कुरु ॥

अत्रागच्छ । आवाहितो भव । अवस्थापितो भव । सन्निधापितो भव । सन्निरुध्दो भव । सम्मुखिनो भव । अवकुण्ठितो भव । व्याप्तो भव । अमृतो भव ॥

कलशार्चनं शङ्खार्चनं च करिष्ये ।

## कलशार्चनम्

कलशं गन्धाक्षत-पत्र-पुष्पैरभ्यर्च्य, कलशं स्पृष्ट्वा,

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणास्स्मृताः ॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥

अङ्गैश्च सहितास्सर्वे कलशाम्बुसमाश्रिताः ।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥

सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेस्मिन् सन्निधिं कुरु ॥

आपो वा इदगं सर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्न-मापोऽमृतमापस्सम्राडापो विराडापस्स्वराडापश्छन्दाग्-स्यापो ज्योतीगृष्यापो यजूगृष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओं ॥

इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमगं सचतापरुष्णिया ।
असिक्निया मरुद्वृधे वितस्तयार्जीकीये श्रुणुह्या सुषोमया ॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् ।
विधि-हरि-हर-रूपां सेन्दुकोटीरजूटां
कलित-सित-दुकूलां जाह्नवीं तां नमामि ॥

## शङ्खपूजा

कलशोदकेन शङ्खं प्रक्षाल्य । गायत्र्या (प्रणवेन वा) शङ्खमापूर्य शङ्खं गन्धाक्षत-पत्र-पुष्पैरभ्यर्च्य । शङ्खं स्पृष्ट्वा ।

शङ्खं चन्द्रार्कदैवत्यं वारुणं चाधिदैवतम् ।
पृष्ठे प्रजापतिस्तत्र अग्रे गङ्गा सरस्वती ॥

त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे तिष्ठन्ति विप्रेन्द्र तस्मात् शङ्खं प्रपूजयेत् ॥

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
पूजितस्सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥

गर्भा देवारिनारीणां विशीर्यन्ते सहस्रधा ।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥

दर्शनादेव शङ्खस्य किं पुनः स्पर्शनेन तु ।
विलयं यान्ति पापानि हिमवद्भास्करोदये ॥

नत्वा शङ्खं करे स्पृष्ट्वा मन्त्रैरेतैस्तु वैष्णवैः ।
यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम् ॥

शङ्खमध्यस्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ॥

पाञ्चजन्याय विद्महे विष्णुप्रियाय धीमहि ।
तन्नः शङ्खः प्रचोदयात् ॥

शङ्खोदकं कलशे किञ्चिन्निक्षिप्य, देवस्यार्घ्यं दत्वा, शङ्खोदकेन पूजाद्रव्याणि पूजोपकरणानि च प्रोक्ष्य, आत्मानं प्रोक्ष्य तच्छेषं विसृज्य, पुनः शङ्खं पूरयित्वा

## आत्मपूजा

देहो देवालयः प्रोक्तो जीवो देवस्सनातनः ।
त्यजेदज्ञाननिर्माल्यं सोऽहं भावेन पूजयेत् ॥

## मण्टपपूजा

उत्तप्तोज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलम् ।
शुद्धस्फाटिकभित्तिका-विरचितैः स्तम्भैश्च हेमैः शुभैः ॥

द्वारैश्चामररत्नराजखचितैः शोभावहैः मण्टपैः ।
तत्रान्यैरपिशङ्ख चक्रधवलैः प्रभ्राजितं स्वस्तिकैः ॥

मुक्ताजालविलम्बमण्टपयुतैर्वज्रैश्च सोपानकैः ।
नानारत्नविनिर्मितैश्च कलशैरत्यन्तशोभावहम् ॥

माणिक्योज्वलदीपदीप्ति विलसत् लक्ष्मीविलासास्पदम् ।
ध्यायेन्मण्टपमर्चनेषु सकलेष्वेवं विधं साधकः ॥

द्वारपालपूजां करिष्ये

## द्वारपालपूजा

पूर्वद्वारे द्वारश्रियै नमः, धात्रे नमः, विधात्रे नमः ।
दक्षिणद्वारे द्वारश्रियै नमः, गुहाय नमः, गणपतये नमः ।
पश्चिमद्वारे द्वारश्रियै नमः, नन्दीश्वराय नमः, क्षेत्रपालाय नमः।
उत्तरद्वारे द्वारश्रियै नमः, चण्डीश्वराय नमः, भृङ्गीश्वराय नमः।
ऊर्ध्वद्वारे द्वारश्रियै नमः, आकाशाय नमः, अन्तरिक्षाय नमः।
अधोद्वारे द्वारश्रियै नमः, भूम्यै नमः, पातालाय नमः।

मध्ये सकलगुणशक्ति युक्ताभ्यः श्री साम्बसदाशिव पञ्चायतन देवताभ्यो नमः द्वारपालपूजां समर्पयामि ।

## पीठपूजा

आधारशक्त्यै नमः, मूलप्रकृत्यै नमः, कूर्माय नमः, अनन्ताय नमः, पृथिव्यै नमः, क्षीरसागराय नमः, रत्नद्वीपाय नमः, रत्न-मण्टपाय नमः, ऐरावताय नमः, पुण्डरीकाय नमः, वामनाय नमः, कुमुदाय नमः, अञ्जनाय नमः, पुष्पदन्ताय नमः, सार्वभौमाय नमः, सुप्रतीकाय नमः, वास्तुपुरुषाय नमः, धर्माय नमः, अधर्माय नमः, ज्ञानाय नमः, अज्ञानाय नमः, वैराग्याय नमः, अवैराग्याय नमः, ऐश्वर्याय नमः, अनैश्वर्याय नमः, मध्ये सं सत्त्वाय नमः, रं रजसे

नमः, तं तमसे नमः, अं आत्मने नमः, अः अन्तरात्मने नमः, पं परमात्मने नमः, ओं ह्रीं ज्ञानात्मने वह्निमण्डलाय दशकलात्मने नमः, सूर्यमण्डलाय द्वादशकलात्मने नमः, सोममण्डलाय षोडशकलात्मने नमः, मध्ये सकलगुणशक्तियुक्ताभ्यः श्री साम्बसदाशिव पञ्चायतन देवताभ्यः पीठपूजां समर्पयामि ॥

## श्रीमहागणपति पूजा

अथ श्री महागणपतिपूजां करिष्ये ॥

गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिस्सीद सादनम् ॥

श्री महागणपतये नमः । अस्मिन् बिम्बे भूः श्री महागणपतिं आवाहयामि । भुवः श्री महागणपतिं आवाहयामि । सुवः श्री महागणपतिं आवाहयामि । भूर्भुवस्सुवः श्रीमहागणपतिं आवाहयामि । श्री महागणपतये नमः ध्यायामि । श्री महागणपतये नमः आसनं कल्पयामि । श्री महागणपतये नमः पादारविंदयोः पाद्यं पाद्यं समर्पयामि । श्री महागणपतये नमः हस्तेषु अर्घ्यमर्घ्यं समर्पयामि । श्री महागणपतये नमः मुखे आचमनीयमाचमनीयं समर्पयामि । स्नपयामि ।

आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे ।
यो वः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव मातरः ।
तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

# गणेशाथर्वशीर्षम्

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाऽक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्तिन इंद्रो वृद्धश्रवाः । स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ओं शांतिः शांतिः शांतिः ॥

ॐ नमस्ते गणपतये । त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यं । ऋतं वच्मि । सत्यं वच्मि । अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमवशिष्यम् । अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणत्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् । त्वं वाङ्मयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोसि । सर्वं जगदिदं त्वत्तो जायते । सर्वं जगदिदं त्वत्तस्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति । सर्वं जगदिदं त्वयि प्रत्येति । त्वं भूमिरापोनलोऽ-

निलोनभः । त्वं चत्वारि वाक् पदानि । त्वं गुणत्रयातीतः । त्वं देहत्रयातीतः । त्वं कालत्रयातीतः । त्वं मूलाधारे स्थितोसि नित्यम् । त्वं शक्ति त्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म भूर्भुवस्सुवरोम् । गणादिं पूर्वमुच्चार्य वर्णादिं तदनन्तरम् । अनुस्वारः परतरः । अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् । गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः सन्धानम् । सँ हिता सन्धिः । सैषा गणेश विद्या । गणक ऋषिः । निचृद् गायत्री छन्दः । गणपतिर्देवता । ॐ गं गणपतये नमः । एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ।। एकदन्तं चतुर्हस्तं पाशमङ्कुश धारिणम् । रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् । रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् । रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैस्सुपूजितम् । भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् । आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् । एवं ध्यायति यो नित्यं स योगी योगिनां वरः । नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायै-कदन्ताय विघ्ननाशिने शिवसुताय श्री वरदमूर्तये नमः ।। एतदथर्व-शीर्षं योधीते । स ब्रह्मभूयाय कल्पते । स सर्वतः सुखमेधते । स

सर्वविघ्नैर्न बाध्यते । स पञ्चमहापापात्प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । सर्वत्राधीयानोऽपविघ्नो भवति । धर्मार्थकाममोक्षञ्च विन्दति ॥ इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान् भवति । सहस्रावर्तनाद्यं यं काममधीते । तं तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति । स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति । स विद्यावान् भवति । इत्यथर्वण वाक्यम् । ब्रह्माद्याचरणं विद्यात् । न बिभेति कदाचनेति । यो दूर्वाङ्कुरैर्यजति । स वैश्रवणोपमो भवति । यो लाजैर्यजति । स यशोवान् भवति । स मेधावान् भवति । यो मोदकसहस्रेण यजति । स वाञ्छित फलमवाप्नोति । यस्साज्यसमिद्भिर्यजति । स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा । सूर्यवर्चस्वी भवति । सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा । स सिद्धमन्त्रो भवति । महाविघ्नात्प्रमुच्यते । महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति । य एवं वेद । इत्युपनिषत् ।

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवा̐ सस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्तिन इन्द्रो वृद्धश्रवाः । स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्ताक्ष्र्यो अरिष्टनेमिः । स्वस्तिनो बृहस्पतिर्दधातु । ओं शान्तिः शान्तिः शान्तिः ॥

## श्री गणेशसूक्तम्

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन । विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् । तुविमात्रमवोभिः ॥ न हि त्वा शूर देवा न मर्तासो दित्सन्तम् । भीमं न गां वारयन्ते ॥ एतोन्विन्द्रं स्तवामेशानं वस्वः स्वराजम् । न राधसा मर्धिषन्नः ॥ प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् । अभि-राधसा जुगुरत् ॥ आ नो भर दक्षिणेनाभि सव्येन प्रमृश । इन्द्र मानो वसोर्निर्भाक् ॥ उपक्रमस्वा भर धृषता धृष्णो जनानाम् । अदाशूष्टरस्य वेदः ॥ इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः । अस्माभिः सुतं सनुहि ॥ सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू जरन्ते ॥ नि षु सीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवञ्चित्रमर्च ॥ अभिख्यानो मघवन्नाधमाना-न्त्सखे बोधिवसुपते सखीनाम् । रणं कृधि रणकृत्सत्यशुष्माभक्ते

चिदा भंजा राये अस्मान् ।। गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।। ओं शान्तिः शान्तिः शान्तिः ।।

श्री महागणपतये नमः शुद्धोदकस्नानं समर्पयामि । स्नानाङ्गमाचमनीयमाचमनीयं समर्पयामि । श्री महागणपतये नमः वस्त्रयुग्मं समर्पयामि । श्री महागणपतये नमः उपवीतं समर्पयामि । श्री महागणपतये नमः आभरणं समर्पयामि । श्री महागणपतये नमः दिव्यपरिमलगन्धं समर्पयामि । श्री महागणपतये नमः अक्षतान् समर्पयामि । श्री महागणपतये नमः पुष्पाणि समर्पयामि । अथ नामपूजां करिष्ये ।। सुमुखाय नमः । एकदन्ताय नमः । कपिलाय नमः । गजकर्णकाय नमः । लम्बोदराय नमः । विकटाय नमः । विघ्नराजाय नमः । गणाधिपाय नमः । धूमकेतवे नमः । गणाध्यक्षाय नमः । फालचन्द्राय नमः । गजाननाय नमः ।। इति नामपूजां समर्पयामि ।।

कृष्णागरु समायुक्तं गुग्गुलं घृतपूरितम् ।
उमासुत नमस्तेऽस्तु धूपोऽयं प्रतिगृह्यताम् ।।

श्री महागणपतये नमः धूपमाघ्रापयामि ।।

अज्ञानतिमिरध्वंसिन् हृदयज्ञानवर्धन ।
प्रकाशं स्वीकुरुष्वेश घृतवर्तिस्थतेजसः ।।

श्री महागणपतये नमः दीपं दर्शयामि ।। धूपदीपानन्तरं आचमनीयमाचमनीयं समर्पयामि ।। विश्वामित्र ऋषिः । सविता देवता ।

दैवी गायत्रीं छन्दः । ओं भूर्भुवस्सुवः। तत्सवितुवरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।। इति प्रोक्ष्य । प्रातः—सत्यं त्वर्तेन परिषिञ्चामि । (सायं—ऋतं त्वा सत्येन परिषिञ्चामि ।) अमृतमस्तु इति धेनुमुद्रां प्रदर्श्य । अमृतोपस्तरणमसि स्वाहा—इति किञ्चिज्जलं विसृज्य । प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहा । ब्रह्मणे स्वाहा । श्री महागणपतये नमः यथाविहित नैवेद्यं निवेदयामि । मध्ये मध्ये स्वादूदकं समर्पयामि । अमृतापिधानमसि । उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनं समर्पयामि । पादप्रक्षालनं समर्पयामि । पुनराचमनीयं समर्पयामि । पूगीफलताम्बूलं समर्पयामि । नीराजनम् ।।

हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्योसानीति । एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुस्तेजो दधाति ।।

मङ्गलनीराजनं दर्शयामि । श्री महागणपतये नमः वेदोक्त मन्त्रपुष्पं समर्पयामि । श्री महागणपतये नमः प्रदक्षिण नमस्कारान् समर्पयामि । तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ।। श्री महागणपतये नमः प्रसन्नार्घ्यं समर्पयामि ।। वक्रतुण्ड महाकाय सूर्यकोटि समप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु

सर्वदा ।। श्री महागणपतये नमः। मनोरथान् प्रार्थयामि ।। सर्वोपचार-पूजाः समर्पयामि ।। अनया पूजया श्री महागणपतिः प्रीयताम् ।। इति किञ्चिज्जलं विसृजेत् ।।

## ध्यानम्

शान्तं पद्मासनस्थं शशधरमकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम् ।
नागं पाशं च घण्टां प्रलयहुतवहं चाङ्कुशं वामभागे
नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ।।

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ।।

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने ।।

गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिणेत्रं
बृहदुदरमशेषं भूतिरूपं पुराणम् ।
अमरवरसुपूज्यं रक्तवर्णं सुरेशं
पशुपतिसुतमीशं विघ्नराजं नमामि ।।

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिणेत्रां भजे ॥

महादेवं महेशानं महेश्वरमुमापतिम् ।
महासेनगुरुं वन्दे महाभयनिवारणम् ॥
शुद्धस्फटिकसङ्काशं शुद्धविद्याप्रदायकम् ।
शुद्धं सच्चित्सुखानन्दं सदाशिवमहं भजे ॥

ध्यायामि ।

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।
सभूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, आवाहयामि ॥

पुरुष एवेदँ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, आसनं कल्पयामि ॥

एतावानस्य महिमा । अतो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, पादारविन्दयोः पाद्यं पाद्यं समर्पयामि ॥

त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः ।

ततो विष्वङ्व्यक्रामत् । साशनानशने अभि ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, हस्तेषु अर्घ्यमर्घ्यं समर्पयामि ॥

तस्माद्विराडजायत । विराजो अधि पूरुषः ।

स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, मुखे आचमनीयमाचमनीयं समर्पयामि ॥

## मलापकर्षणस्नानम्

हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्ता न आपश्शꣳ स्योना भवन्तु ॥ यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । मधुश्चुतश्शुचयो याः पावकास्तान आपश्शꣳ स्योना भवन्तु । यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवीम् पयसोन्दन्ति शुक्रास्तान आपश्शꣳ स्योना भवन्तु । शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳ रप्सुषदो हुवेवो मयि वर्चो बलमोजो निधत्त । यददस्संप्रयतीरहावनदताहते ।

तस्मादानद्यो नामस्थतावो नामानि सिन्धवः । यत्प्रेषिता वरुणेनता-
श्शीभ॑ँ समवल्गत । तदाप्नोदिन्द्रोवो यतीस्तस्मादापो अनुस्थन ।
अपकाम॑ँ स्यन्दमाना अवीवरतवोहिकम् । इन्द्रोवश्शक्तिभिर्देवी-
स्तस्माद्वार्णामवोहितम् । एको देवो अप्यतिष्ठथ्स्यन्दमाना यथावशम्।
उदानिषुर्महीरिति तस्मादुदकमुच्यते । आपो भद्रा घृतमिदाप
आसुरग्नीषोमौ बिभ्रत्याप इत्ताः । तीव्रोरसो मधुपृचामरङ्गम आमा
प्राणेन सहवर्चसागन् । आदित्पश्याम्युतवाशृणोम्यामाघोषो गच्छति
वाङ्न आसाम् । मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं
यदावः ॥ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय
चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव
मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा
च नः ॥ दिविश्रयस्वान्तरिक्षे यतस्व पृथिव्या सम्भव ब्रह्मवर्चसमसि
ब्रह्मवर्चसायत्वा । अपां ग्रहान्गृह्णाति ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, मलापकर्षण स्नानं समर्पयामि ॥

पयसि सोममावाहयामि । दधिनि वायुमावाहयामि । आज्ये रविमावाहयामि। क्षौद्रे विश्वान् देवानावाहयामि। शर्करायां सावित्री-मावाहयामि । फले रुद्रमावाहयामि । आवाहितदेवताभ्यो नमः ।

लं पृथिव्यात्मभ्यः गन्धं कल्पयामि । हं आकाशात्मभ्यः पुष्पं

कल्पयामि । यं वाय्वात्मभ्यः धूपमाघ्रापयामि । रं अग्न्यात्मभ्यः दीपं दर्शयामि । वं अमृतात्मभ्यः अमृतोपहारं निवेदयामि । सं सर्वात्मभ्यः सर्वोपचारपूजास्समर्पयामि ।

## पञ्चामृतस्नानम्—क्षीरस्नानम्

आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे ।। आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तमः ।। सं ते पयाँसि समुयन्तु वाजाः सं वृष्णियाण्यभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानिधिष्व ।।

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, क्षीरेण स्नपयामि ।।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवेनाति भवे भवस्व माम् । भवोद्भवाय नमः।।

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, क्षीरस्नानानन्तरं शुद्धोदकेन स्नपयामि ।।

## दधिस्नानम्

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्रण आयूँषि तारिषत् ।। आ दधिक्राः शवसा पञ्चकृष्टीः सूर्य इव ज्योतिषा पस्ततान । सहस्रसाः शतसा वाज्यर्वा पृणक्तु

मध्वासमिमां वचाँसि ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, दध्ना स्नपयामि ।

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, दधिस्नानानन्तरं शुद्धोदकेन स्नपयामि ॥

## आज्यस्नानम्

शुक्रमसि ज्योतिरसि तेजोसि देवो वस्सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, आज्येन स्नपयामि ।

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, आज्यस्नानानन्तरम् शुद्धोदकेन स्नपयामि ॥

## मधुस्नानम्

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधुनक्तमुतोषसि मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु

नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् । तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोन्नादो मधव्यो सानि ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, मधुना स्नपयामि ।

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, मधुस्नानानन्तरम् शुद्धोदकेन स्नपयामि ॥

## शर्करास्नानम्

तानः शिवाः शर्करास्सन्तु सर्वाः । अग्ने रेतश्चन्द्रँ हिरण्यम् । अद्भ्यः सम्भूतममृतं प्रजासु । तत्सम्भरन्नुत्तरतो निधाय । अति प्रयच्छन्दुरितिं तरेयम् ॥ स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतु नाम्ने । स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, शर्करया स्नपयामि ।

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, शर्करास्नानानन्तरं शुद्धोदकेन स्नपयामि ॥

## फलस्नानम्

याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।
बृहस्पति प्रसूतास्तानो मुञ्चत्व ँ हसः ॥

अपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु । पर्णं वनस्पतेरिवाभिनश्शीयता ँ रयिस्सच-तान्नश्शचीपतिः ॥ परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजा ँ रीरिषो मोत वीरान् ॥ वातं प्राणं मनसाऽन्वारभामहे प्रजापतिं यो भुवनस्य गोपाः। स नो मृत्योस्त्रायतां पात्व ँ हसो ज्योग्जीवा जरामशीमहि ॥ अमुत्र भूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ हरि ँ हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम् । ब्रह्मसरूप मनुमेदमागादयनं मा विवधीर्विक्रमस्व ॥ शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् । उभयोर्लोकयोर् ऋध्वाऽति मृत्युं तराम्यहम् ॥ मा छिदो मृत्यो मा वधीर्मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्र नृचक्षसं त्वा हविषा विधेम ॥ मा नो महान्तमुत मानो अर्भकं मान उक्षन्तमुतमान उक्षितम् । मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः । मा न-स्तोके

तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वय ँ स्याम पतयो रयीणाम् ॥ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नस्स्वस्तिदा अभयङ्करः ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ अपमृत्युमपक्षुधम् । अपेतः शपथं जहि । अधानो अग्न आवह । रायस्पोष ँ सहस्रिणम् ॥ ये ते सहस्रमयुतं पाशाः । मृत्यो मर्त्याय हन्तवे । तान् , यज्ञस्य मायया । सर्वानवयजामहे । मृत्यवे स्वाहा मृत्यवे स्वाहा ॥ भूर्भुवस्वः । ओजो बलम् । ब्रह्म क्षत्रम् । यशो महत् । सत्यं तपो नाम । रूपममृतम् । चक्षुश्श्रोत्रम् ॥ मन आयुः । विश्वं यशो महः । समन्तपोहरोभाः । जातवेदा यदि वा पावकोऽसि । वैश्वानरो यदि वा वैद्युतोसि । शं प्रजाभ्यो यजमानाय लोकम् । ऊर्जं पुष्टिं दददभ्यावववृत्स्व ॥

सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोके लोक एनं मृत्युर्विन्देत् । मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । लोकाल्लोकादेव मृत्युमवयजते ।

नैनँ ल्लोके लोके मृत्युर्विन्दति । यदमुष्मै स्वाहाऽमुष्मै स्वाहेति जुह्वथ्सङ्क्षीत । बहुं मृत्युममित्रङ्कुर्वीत । मृत्यवे स्वाहेत्येकस्मा एवैकाञ्जुहुयात् । एको वा अमुष्मिँ ल्लोके मृत्युः । अशनयामृत्युरेव । तमेवामुष्मिँ ल्लोकेऽवयजते । भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिञ्जुहोति । भ्रूणहत्यामेवावयजते । तदाहुः । यद्भ्रूणहत्या पात्र्याऽथ । कस्माद्यज्ञेपि क्रियत इति । अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः। भ्रूणहत्या वावमृत्युरिति । यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिञ्जुहोति ॥ मृत्युमेवाहुत्या तर्पयित्वा परिपाणङ्कृत्वा । भ्रूणघ्ने भेषजङ्करोति । एताँ ह वै मुण्डिभ औदन्यवः । भ्रूणहत्यायै प्रायश्चित्तिँ विदाञ्चकार । यो हास्यापि प्रजायां ब्राह्मणँ हन्ति । सर्वस्मै तस्मै भेषजङ्करोति । जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिञ्जुहोति । वरुणो वै जुम्बकः । अन्तत एव वरुणमवयजते । खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्धञ्जुहोति । एतद्वै वरुणस्य रूपम् । रूपेणैव वरुणमवयजते ॥

सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्यात्मानं दशधा चरन्तम् । अन्तस्समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे । अन्तः प्रविष्टश्शास्ताजनानाम् । एकस्सन् बहुधाविचारः । शतँ शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं

भवन्ति । स मानसीन आत्मा जनानाम् ।। अन्तः प्रविष्टश्शास्ता-
जनाना॑ँ सर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर् होतारो यत्र
सम्पदं गच्छन्ति देवैः । स मानसीन आत्मा जनानाम् । ब्रह्मेन्द्रमग्नि
जगतः प्रतिष्ठाम् । दिव आत्मान॑ँ सवितारं बृहस्पतिम् । चतुर् होतारं
प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविन्दत् । अन्तः प्रविष्टं
कर्तारमेतम् । त्वष्टार॑ँ रूपाणि विकुर्वन्तं विपश्चिम् ।। अमृतस्य प्राणं
यज्ञमेतम् । चतुर् होतृणामात्मानं कवयो निचिक्युः । अन्तः प्रविष्टं
कर्तारमेतम् । देवानां बन्धु निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् ।
चतुर् होतृणामात्मानं कवयो निचिक्युः । शतं नियुतः परिवेद विश्वा
विश्ववारः । विश्वमिदं वृणाति । इन्द्रस्यात्मा निहितः पञ्चहोता ।
अमृतं देवानामायुः प्रजानाम् ।। इन्द्र॑ँ राजान॑ँ सवितारमेतम् ।
वायोरात्मानं कवयो निचिक्युः । रश्मि॑ँ रश्मीनां मध्ये तपन्तम् ।
ऋतस्य पदे कवयो निपान्ति । य आण्डकोशे भुवनं बिभर्ति ।
अनिर्भिण्णस्सन्नथ लोकान् विचष्टे । यस्याण्डकोश॑ँ शुष्ममाहुः
प्राणमुल्बम् । तेन क्लृप्तोऽमृतेनाहमस्मि । सुवर्णं कोश॑ँ रजसा
परीवृतम् । देवानां वसुधानीं विराजम् । अमृतस्य पूर्णां तामुकलां
विचक्षते । पाद॑ँ षड्ढोतुर्नकिला विवित्थ्से । येनर्तवः पञ्चधोतक्लृप्ताः।
उत वा षड्धा मनसोतक्लृप्ताः । त॑ँ षड्ढोतारमृतुभिः कल्पमानम् ।

ऋतस्य पदे कवयो निपान्ति । अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मान ँ शतधा चरन्तम् ॥ इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवाना ँ हृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद्ब्रह्मण उज्जभार । अर्क ँ श्चोतन्त ँ सरिरस्य मध्ये । आयस्मिन्थ्सप्तपेरवः । मेहन्ति बहुला ँ श्रियम् । बह्वश्वामिन्द्र गोमतीम् । अच्युतां बहुला ँ श्रियम् । सहरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । बह्वश्वामिन्द्र गोमतीम् । अच्युतां बहुला ँ श्रियम् । मह्यमिन्द्रो नियच्छतु । शत ँ शता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुभी रश्मिरिन्द्रः । प्रम ँ हमाणो बहुला ँ श्रियम् । रश्मिरिन्द्रस्सविता मे नियच्छतु ॥ घृतं तेजो मधुमदिन्द्रियम् । मय्ययमग्निर्दधातु । हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति । स न इन्द्रः कामवरं ददातु । पञ्चारं चक्रं परिवर्तते पृथु । हिरण्यज्योतिस्सरिरस्य मध्ये । अजस्रंज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । सप्त युञ्जन्ति रथमेकचक्रम् ॥ एको अश्वो वहति सप्त नामा । त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयस्सुवर्विदः । ततः, क्षत्रं बलमोजश्च

जातम् । तदस्मै देवा अभिसंनमन्तु । श्वेत ँ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् ॥ रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः । शत ँ सहस्राणि प्रयुतानि नाव्यानाम् । अयं यश्श्वेतो रश्मिः । परिसर्वमिदं जगत् । प्रजां पशून्धनानि । अस्माकं ददातु । श्वेतो रश्मिः परिसर्वं बभूव । सुवन्मह्यं पशून् विश्वरूपान् । पतङ्गमक्तमसुरस्य मायया ॥ हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमाना ँ स्वर्यं मनीषाम् । ऋतस्य पदे कवयो निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । अग्निस्ता ँ अग्रे प्रमुमोक्तु देवः ॥ प्रजापतिः प्रजया संविदानः । वीत ँ स्तुकेस्तुके । युवमस्मासु नियच्छतम् । प्रप्रयज्ञपतिं तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । तेषा ँ सप्तानामिहरन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैक रूपाः ॥ वायुस्ता ँ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । तेषा ँ सप्ताना-

मिहरन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥

भर्तासन्भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः । यदा भारं तन्द्रयते सभर्तुम् । निधाय भारं पुनरस्तमेति । तमेव मृत्युममृतं तमाहुः । तं भर्तारं तमु गोप्तारमाहुः । स भृतो भ्रियमाणो बिभर्ति । य एनं वेद सत्येन भर्तुम् । सद्योजातमुतजहात्येषः । उतो जरन्तं न जहात्येकम् ॥ उतो बहूनेकमहर्जहार । अतन्द्रो देवस्सदमेव प्रार्थः । यस्तद्वेद यत आबभूव । सन्धां च याँ संदधे ब्रह्मणैषः । रमते तस्मिन्नुत जीर्णे शयाने । नैनं जहात्यहस्सु पूर्व्येषु । त्वामापो अनु सर्वाश्चरन्ति जानतीः। वत्सं पयसा पुनानाः । त्वमग्निँ हव्यवाहँ समिन्धसे । त्वं भर्ता मातरिश्वा प्रजानाम् ॥ त्वं यज्ञस्त्वमुवेवासि सोमः । तव देवा हवमायन्ति सर्वे । त्वमेकोऽसि बहूननुप्रविष्टः । नमस्ते अस्तु सुहवोम एधि । नमो वामस्तु शृणुतँ हवं मे । प्राणापानावजरँ सं चरन्तौ । ह्वयामि वां ब्रह्मणा तूर्तमेतम् । यो मां द्वेष्टि तं जहि तं युवाना । प्राणापानौ संविदानौ जहितम् । अमुष्यासुनामा सङ्गसाथाम् ॥ तं मे देवा ब्रह्मणा संविदानौ । वधाय दत्तं तमहँ हनामि । असज्जजान सत आबभूव । यं यं जजान स उ गोपो अस्य । यदा भारं तन्द्रयते स भर्तुम् । परास्य भारं पुनरस्तमेति । तद्वैत्वं प्राणो अभवः । महान्भोगः प्रजापतेः । भुजः

करिष्यमाणः । यद्देवान्प्राणयो नव ॥

हरि॒ँ॒ हरन्तमनुयन्ति देवाः । विश्वस्येशानं वृषभं मतीनाम् । ब्रह्मसरूपमनुमेदमागात् । अयनं मा विवधीर्विक्रमस्व । मा छिदो मृत्यो मा वधीः । मा मे बलं विवृहो मा प्रमोषीः । प्रजां मामे रीरिष आयुरुग्र । नृचक्षसं त्वा हविषा विधेम । सद्यश्चकमानाय । प्रवेपानाय मृत्यवे ॥ प्रास्मा आशा अशृण्वन् । कामेना जनयन्पुनः । कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः । यदमीषामदः प्रियम् । तदैतूपमामभि । परं मृत्यो अनु परेहि पन्थाम् । यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजा॒ँ॒ रीरिषो मोत वीरान् । प्रपूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं चर्षणीनाम् । यः प्रजानामेकराण्मानुषीणाम् । मृत्युं यजे प्रथमजामृतस्य ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, फलेन स्नपयामि ।

## गन्धोदकस्नानम्

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरी॒ँ॒ सर्वभूतानां तामिहोपह्वये श्रियम् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, गन्धोदकेन स्नपयामि ।

## अक्षतोदकस्नानम्

उपास्मै गायता नरः पवमानायेन्दवे । अभिदेवाँ इयक्षते ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, अक्षतोदकेन स्नपयामि ।

## पुष्पोदकस्नानम्

आयनेते परायणे दूर्वारोहन्तु पुष्पिणीः ।

ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, पुष्पोदकेन स्नपयामि ॥

## सुवर्णोदकस्नानम्

तत्सुवर्णँ हिरण्यमभवत् । तत्सुवर्णस्य हिरण्यस्य जन्म ।

य एवँ सुवर्णस्य हिरण्यस्य जन्मवेद। सुवर्ण आत्मना भवति॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, सुवर्णोदकेन स्नपयामि ॥

तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी-स्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥

ओं शान्तिः शान्तिः शांन्तिः ॥

वामदेवाय नमः स्नानं समर्पयामि । ज्येष्ठाय नमः वस्त्रं समर्पयामि । श्रेष्ठाय नमः उपवीतं समर्पयामि । रुद्राय नमः आभरणं समर्पयामि । कालाय नमः गन्धं समर्पयामि । कलविकरणाय नमः अक्षतान् समर्पयामि । बलविकरणाय नमः पुष्पाणि समर्पयामि । बलाय नमः धूपमाघ्रापयामि । बलप्रमथनाय नमः दीपं दर्शयामि । सर्वभूतदमनाय नमः नैवेद्यं समर्पयामि । मनोन्मनाय नमः ताम्बूलं समर्पयामि । अघोराय नमः मङ्गलनीराजनं दर्शयामि । तत्पुरुषाय नमः मन्त्रपुष्पं समर्पयामि । ईशानाय नमः प्रदक्षिण नमस्कारान् समर्पयामि । सर्वेश्वराय नमः सर्वोपचारपूजां समर्पयामि ।। अथास्याष्टभिर्मन्त्रैरष्टौ पुष्पाणि ददाति ।। भवाय देवाय नमः । शर्वाय देवाय नमः । ईशानाय देवाय नमः । पशुपतये देवाय नमः । रुद्राय देवाय नमः । उग्राय देवाय नमः । भीमाय देवाय नमः । महते देवाय नमः ।। भवस्य देवस्य पत्न्यै नमः । शर्वस्य देवस्य पत्न्यै नमः । ईशानस्य देवस्य पत्न्यै नमः । पशुपतेर्देवस्य पत्न्यै नमः । रुद्रस्य देवस्य पत्न्यै नमः । उग्रस्य देवस्य पत्न्यै नमः । भीमस्य देवस्य पत्न्यै नमः । महतो देवस्य पत्न्यै नमः ।। भवं देवं तर्पयामि । शर्वं देवं तर्पयामि । ईशानं देवं तर्पयामि । पशुपतिं देवं तर्पयामि । रुद्रं देवं तर्पयामि । उग्रं देवं तर्पयामि । भीमं देवं तर्पयामि । महान्तं

देवं तर्पयामि । भवस्य देवस्य पत्नीं तर्पयामि । शर्वस्य देवस्य पत्नीं तर्पयामि । ईशानस्य देवस्य पत्नीं तर्पयामि । पशुपतेर्देवस्य पत्नीं तर्पयामि । रुद्रस्य देवस्य पत्नीं तर्पयामि । उग्रस्य देवस्य पत्नीं तर्पयामि । भीमस्य देवस्य पत्नीं तर्पयामि । महतो देवस्य पत्नीं तर्पयामि ।। इति तर्पयित्वा ।

आशास्तेऽयं यजमानोऽसौ । आयुराशास्ते । सुप्रजास्त्वमाशास्ते । सजातवनस्यामाशास्ते । उत्तरां देवयज्यामाशास्ते । भूयो हविष्करणमाशास्ते । दिव्यं धामाशास्ते । विश्वं प्रियमाशास्ते । यदनेन हविषाशास्ते । तदश्यात्तदृध्यात् । तदस्मै देवारासन्ताम् । तदग्निर्देवो देवेभ्यो वनते । वयमग्नेर्मानुषाः । इष्टं च वीतं च । उभे च नो द्यावापृथिवी अँ हसस्पाताम् । इहगतिर्वामस्येदं च । नमो देवेभ्यः।।

उत्तरतः चण्डीश्वराय नमः निर्माल्यं विसृज्य—

अस्य रुद्रस्य प्रश्नस्य । अघोर ऋषिः । अनुष्टुप् छन्दः । सङ्कर्षणमूर्तीस्वरूपो योऽसावादित्यः परमपुरुषस्स एष रुद्रो देवता । अग्निक्रतुचरमायामिष्टकायाँ शतरुद्रीये जपाभिषेके विनियोगः ।। सकलस्य रुद्राध्यायस्य श्री रुद्रो देवता । एका गायत्रीच्छन्दः । तिस्रोऽनुष्टुभः । तिस्रः पङ्क्तयः । सप्तानुष्टुभो द्वे जगत्यौ । परमेष्ठी ऋषिः । श्री साम्बसदाशिवो देवता । श्री साम्बसदाशिव प्रीत्यर्थे जपे विनियोगः ।

अग्निहोत्रात्मने अङ्गुष्ठाभ्यां नमः । दर्शपूर्णमासात्मने तर्जनीभ्यां नमः । चातुर्मास्यात्मने मध्यमाभ्यां नमः । निरूढ पशुबन्धात्मने अनामिकाभ्यां नमः । ज्योतिष्टोमात्मने कनिष्ठिकाभ्यां नमः। सर्वक्रत्वात्मने करतलकरपृष्ठाभ्यां नमः ॥ अग्निहोत्रात्मने हृदयाय नमः । दर्शपूर्णमासात्मने शिरसे स्वाहा । चातुर्मास्यात्मने शिखायै वषट् । निरूढपशुबन्धात्मने कवचाय हुम् । ज्योतिष्टोमात्मने नेत्रत्रयाय वौषट् । सर्वक्रत्वात्मने अस्त्राय फट् ॥ भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् ॥

आपाताल-नभस्स्थलान्त-भुवन-ब्रह्माण्डमाविस्फुर-
ज्ज्योतिःस्फाटिकलिङ्गमौलि-विलसत्पूर्णेन्दुवान्तामृतैः ।
अस्तोकाप्लुतमेकमीशमनिशं रुद्रानुवाकाञ्जपन्
ध्यायेदीप्सितसिद्धये ध्रुवपदं विप्रोऽभिषिञ्चेच्छिवम् ॥

ब्रह्माण्डव्याप्तदेहा भसित-हिमरुचा भासमाना भुजङ्गैः
कण्ठेकालाः कपर्दाकलित-शशिकलाश्चण्डकोदण्डहस्ताः ।
त्र्यक्षा रुद्राक्षभूषाः प्रणतभयहराश्शाम्भवा मूर्तिभेदाः
रुद्राश्श्रीरुद्रसूक्तप्रकटित-विभवा नः प्रयच्छन्तुः सौख्यम् ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे सँविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयश्च मे जीवातुश्च मे दीर्घायुत्वं च

मेऽन मित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शँ्सिषद्विश्वे देवाः सूक्तवाचः पृथिविमातर्मा मा हिँ्सीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ् शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु । ओं शान्तिः शान्तिः शान्तिः ॥

## श्री रुद्रप्रश्नः

शम्भवे नमः ॥ ओं नमो भगवते रुद्राय ॥ ओं नमस्ते रुद्र मन्यव उतोत इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः । या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो रुद्र मृडय । याते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तनुवा शन्तमया गिरिशंताभिचाकशीहि । यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिँ्सीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छावदामसि । यथा नः सर्वमिज्जगदयक्ष्मँ् सुमना असत् । अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहीँ्श्च सर्वाञ्जम्भयन्थ्सर्वाश्च यातुधान्यः । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमाँ् रुद्रा अभितो दिक्षु श्रितास्सहस्रशोऽवैषाँ् हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो

विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयातिनः । नमो अस्तु नीलग्रीवाय सहस्त्राक्षाय मीढुषे । अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः । प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः परा ता भगवो वप । अवतत्य धनुस्त्वँ सहस्त्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव । विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ उत । अनेशन्नस्येषव आभुरस्य निषङ्गथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयास्मान्, विश्वतस्त्वमयक्ष्मया परिब्भुज । नमस्ते अस्त्वायुधायानातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने । परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधेहितम् ॥ १ ॥

नमस्ते अस्तु भगवन्विश्वेश्वराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकाग्निकालाय कालाग्नि-रुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय नमः ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां

पतये नमो नमो रुद्रायाततताविने क्षेत्राणां पतये नमो नमः सूताया-
हन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये
नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये
वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां
पतये नमो नमः कृत्स्नवीताय धावते सत्वनां पतये नमः ॥ २ ॥

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमः
कुकुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषुधिमते
तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो
नमो निचेरवे परिचरायारण्यानां पतये नमो नमः सृकाविभ्यो
जिघाँसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यः
प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये
नमो नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः
प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो
नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यश्शयानेभ्यश्च वो
नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च
वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्व-
पतिभ्यश्च वो नमः ॥ ३ ॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृ ँ हतीभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः, क्षुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रथेभ्यो रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः, क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ।। ४ ।।

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकंठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्त्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृद्ध्वने च नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्त्रोतस्याय च द्वीप्याय च ।। ५ ।।

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चाऽवसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ ६ ॥

नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ७ ॥

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो

नमस्ताराय नमश्शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च ॥ ८ ॥

नम इरिण्याय च प्रपथ्याय च नमः किँ शिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो हृदय्याय च निवेष्प्याय च नमः पाँ सव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः ॥ ९ ॥

द्रापे अन्धसस्पते दरिद्रन्नीललोहित । एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किं चनाममत् । या ते रुद्र शिवा तनूश्शिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी तया नो मृड जीवसे। इमाँ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिम् । यथा नः

शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् । मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ । मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् । मा नोऽवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः । मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते । आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु । रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छद्विबर्हाः । स्तुहि श्रुतं गर्तसदं युवानं मृगन्न भीममुपहत्नुमुग्रम् । मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः । परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय । मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि । विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रँ हेतयोऽन्यमस्मन्निवपन्तु ताः । सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि ॥ १० ॥

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् । तेषाँ सहस्र-

योजनेऽव धन्वानि तन्मसि । अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि । नीलग्रीवाश्शितिकण्ठाः शर्वा अधः, क्षमाचराः । नीलग्रीवा-श्शितिकण्ठा दिवँ रुद्रा उपश्रिताः । ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः । ये भूतानामधिपतयो विशिखासः कपर्दिनः । ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । ये पथां पथिरक्षय ऐलबृदा यव्युधः । ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । य एतावन्तश्च भूयाँसश्च दिशो रुद्रा वित-स्थिरे । तेषाँ सहस्रयोजनेऽवधन्वानि तन्मसि । नमो रुद्रेभ्यो ये पृथिव्यां येऽन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशो-दीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ११ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु । तमु ष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य । यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य । अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः । ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे । तान्, यज्ञस्य मायया सर्वानव यजामहे ।

मृत्यवे स्वाहा मृत्यवे स्वाहा । ओं नमो भगवते रुद्राय विष्णवे मृत्युर्मे पाहि । सदाशिवोम् ॥

## श्री चमकप्रश्नः

ओं अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मेऽधीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥ १ ॥

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च मे जगच्च मे धनं च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातं च मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे वित्तं च मे वेद्यं च मे भूतं च मे भविष्यच्च मे सुगं च मे सुपथं च म ऋद्धं

च म ऋद्धिश्च मे क्लृप्तं च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे ॥ २ ॥

शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रं च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणं च मे यन्ता च मे धर्ता च मे क्षेमश्च मे धृतिश्च मे विश्वं च मे महश्च मे सँविच्च मे ज्ञात्रं च मे सूश्च मे प्रसूश्च मे सीरं च मे लयश्च म ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च मे सूषा च मे सुदिनं च मे ॥ ३ ॥

ऊर्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतं च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रं च म औद्भिद्यं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णं च मे पूर्णतरं च मेऽक्षितिश्च मे कूयवाश्च मेऽन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥ ४ ॥

अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं

च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे ॥ ५ ॥

अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षं च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ ६ ॥

अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥ ७ ॥

इ॒ध्मश्च॑ मे ब॒र्हिश्च॑ मे॒ वेदि॑श्च मे॒ धिष्णि॑याश्च मे॒ स्रुच॑श्च मे चम॒साश्च॑ मे॒ ग्रावा॑णश्च मे॒ स्वर॑वश्च म उप॒रवाश्च॑ मेऽधि॒षव॑णे च मे द्रोणकल॒शश्च॑ मे वाय॒व्या॑नि च मे पूत॒भृच्च॑ म आधव॒नीय॑श्च म॒ आग्नी॑ध्रं च मे हवि॒र्धानं॑ च मे गृ॒हाश्च॑ मे॒ सद॑श्च मे पु॒रोडाशा॑श्च मे पच॒ताश्च॑ मेऽवभृ॒थश्च॑ मे स्वगाका॒रश्च॑ मे ॥ ८ ॥

अ॒ग्निश्च॑ मे घ॒र्मश्च॑ मे॒ऽर्कश्च॑ मे॒ सूर्य॑श्च मे प्रा॒णश्च॑ मेऽश्वमे॒धश्च॑ मे पृ॒थि॒वी च॒ मेऽदि॑तिश्च मे॒ दिति॑श्च मे॒ द्यौश्च॑ मे॒ शक्व॑रीर॒ङ्गुल॑यो॒ दिश॑श्च मे य॒ज्ञेन॑ कल्पन्ता॒मृक्च॑ मे॒ साम॑ च मे॒ स्तोम॑श्च मे॒ यजु॑श्च मे दी॒क्षा च॑ मे॒ तप॑श्च म ऋ॒तुश्च॑ मे व्र॒तं च॑ मेऽहोरा॒त्रयो॑र्वृ॒ष्ट्या बृहद्रथन्त॒रे च॑ मे य॒ज्ञेन॑ कल्पेताम् ॥ ९ ॥

गर्भा॑श्च मे व॒त्साश्च॑ मे॒ त्र्यवि॑श्च मे त्र्य॒वी च॑ मे दित्य॒वाट् च॑ मे दित्यौ॒ही च॑ मे॒ पञ्चा॑विश्च मे पञ्चा॒वी च॑ मे त्रिव॒त्सश्च॑ मे त्रिव॒त्सा च॑ मे तु॒र्यवाट् च॑ मे तुर्यौ॒ही च॑ मे पष्ठ॒वाट् च॑ मे पष्ठौ॒ही च॑ म उ॒क्षा च॑ मे व॒शा च॑ म ऋष॒भश्च॑ मे वे॒हच्च॑ मेऽन॒ड्वाञ्च॑ मे धे॒नुश्च॑ म आयु॑र्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतामपा॒नो य॒ज्ञेन॑ कल्पतां व्या॒नो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ श्रोत्रं॑ य॒ज्ञेन॑ कल्पतां॒ मनो॑ य॒ज्ञेन॑ कल्पतां॒ वाग्य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पताम् ॥ १० ॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविँ शतिश्च मे त्रयोविँ शतिश्च मे पञ्चविँ शतिश्च मे सप्तविँ शतिश्च मे नवविँ शतिश्च म एकत्रिँ शच्च मे त्रयस्त्रिँ शच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विँ शतिश्च मे चतुर्विँ शतिश्च मेऽष्टाविँ शतिश्च मे द्वात्रिँ शश्च मे षट्त्रिँ शच्च मे चत्वारिँ शच्च मे चतुश्चत्वारिँ शच्च मेऽष्टाचत्वारिँ शच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥ ११ ॥

इडा देवहूर्मनुर्यज्ञनीर्बृहस्पति-रुक्थामदानिशँ सिषद्विश्वेदेवाः सूक्तवाचः पृथिवि मातर्मा मा हिँ सीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥

## पुरुषसूक्तम्

ओं सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेदँ सर्वम् । यद्भूतं यच्च

भव्यम् । उतामृतत्वस्येशानः। यदन्नेनातिरोहति । एतावानस्य महिमा । अतो ज्यायाँ्श्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात्पुनः । ततो विष्वङ् व्यक्रामत् । साशनानशने अभि । तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ।। यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः । सप्तास्यासन् परिधयः । त्रिस्सप्त समिधः कृताः। देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः। सम्भृतं पृषदाज्यम् । पशूँ्स्ताँ्श्चक्रे वायव्यान्। आरण्यान् ग्राम्याश्च ये । तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे । छन्दाँ्सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ।। तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ।। ऊरू तदस्य यद्वैश्यः । पद्भ्याँ् शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौस्समवर्तत ।

पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥ वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्, यदास्ते । धाता पुरस्ता-द्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥ अद्भ्यः सम्भूतः पृथिवै रसाच्च । विश्व कर्मणस्समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे । वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥ तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेधसः । यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे ॥ ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवीस्स्वस्तिरस्तुनः । स्वस्तिर्मानुषेभ्यः ।

ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ओं शान्तिः शान्तिः शान्तिः ॥

## श्री दुर्गासूक्तम्

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः । तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीँ शरणमहं प्रपद्ये सुतरसि तरसे नमः। अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्ति-भिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः । विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन् मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् । पृतना जितँ सहमानमुग्रमग्निँ हुवेम परमाथ्सधस्थात् । सनः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरिताऽत्यग्निः । प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व । गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनुसञ्चरेम । नाकस्य पृष्ठमभिसंवसानो वैष्णवीं लोक इहमादयन्ताम् । कात्यायनाय विद्महे कन्यकुमारि धीमहि । तन्नो दुर्गिः प्रचोदयात् ॥

# श्रीसूक्तम्

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह । तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् । अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् । कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् । चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे । आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसानुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः । उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे । क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । मनसः काममाकूतिं वाचस्सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीश्श्रयतां यशः । कर्दमेन प्रजाभूता मयि सम्भव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् । आपस्सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं

श्रियं वासय मे कुले । आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह । आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह । तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्, विन्देयं पुरुषानहम् । महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥

आभिर्गीर्भिर्यदतोन ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम । ब्रह्म प्रावादिष्म तन्नो माहासीत् । ओं शान्तिः शान्तिः शान्तिः ॥

यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ।

वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, शुद्धोदकस्नानं समर्पयामि । स्नानाङ्गं आचमनीयमाचमनीयं समर्पयामि ॥

सप्तास्यासन् परिधयः । त्रिस्सप्त समिधः कृताः ।

देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, वस्त्रयुग्मं समर्पयामि ॥

तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ।

तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, उपवीतं समर्पयामि ॥

हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्योऽसानीति ।

एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, आभरणं समर्पयामि ॥

तस्माद्यज्ञात्सर्वहुतः । सम्भृतं पृषदाज्यम् ।

पशूँ स्ताँ श्चक्रे वायव्यान् । आरण्यान् ग्राम्याश्च ये ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, दिव्यपरिमलगन्धं समर्पयामि ॥

तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे ।

छन्दाँ सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, अक्षतान् समर्पयामि ॥

तस्मादश्वा अजायन्त । ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥

श्रीसाम्बसदाशिवपञ्चायतन देवताभ्यो नमः, पुष्पाणि समर्पयामि ॥

अथ नामपूजां करिष्ये ।

ओं शिवाय नमः । महेश्वराय नमः । शम्भवे नमः । पिनाकिने नमः । शशिशेखराय नमः । वामदेवाय नमः । विरूपाक्षाय नमः । कपर्दिने नमः । नीललोहिताय नमः । शङ्कराय नमः । शूलपाणये नमः । खट्वाङ्गिने नमः । विष्णुवल्लभाय नमः । शिपिविष्टाय नमः। अम्बिकानाथाय नमः । श्रीकण्ठाय नमः । भक्तवत्सलाय नमः । भवाय नमः । शर्वाय नमः । त्रिलोकेशाय नमः । शितिकण्ठाय नमः । शिवाप्रियाय नमः । उग्राय नमः । कपालिने नमः । कामारये नमः । अन्धकासुरसूदनाय नमः । गङ्गाधराय नमः । ललाटाक्षाय नमः । कालकालाय नमः । कृपानिधये नमः । भीमाय नमः । परशुहस्ताय नमः । मृगपाणये नमः । जटाधराय नमः । कैलासवासिने नमः। कवचिने नमः । कठोराय नमः । त्रिपुरान्तकाय नमः। वृषाङ्काय नमः । वृषभारूढाय नमः । भस्मोद्धूलितविग्रहाय नमः। सामप्रियाय नमः । स्वरमयाय नमः । त्रयीमूर्तये नमः । अनीश्वराय नमः । सर्वज्ञाय नमः । परमात्मने नमः । सोमसूर्याग्निलोचनाय नमः । हविषे नमः । यज्ञमयाय नमः । सोमाय नमः । पञ्चवक्त्राय नमः । सदाशिवाय नमः । विश्वेश्वराय नमः । वीरभद्राय नमः । गणनाथाय नमः । प्रजापतये नमः । हिरण्यरेतसे नमः । दुर्धर्षाय नमः । गिरीशाय नमः । गिरिशाय नमः । अनघाय नमः । भुजङ्गभूषणाय नमः । भर्गाय नमः । गिरिधन्वने नमः । गिरिप्रियाय नमः । कृत्तिवाससे नमः । पुरारातये नमः । भगवते नमः । प्रमथाधिपाय नमः । मृत्युञ्जयाय नमः । सूक्ष्मतनवे नमः । जगद्व्यापिने नमः । जगद्गुरवे नमः । व्योमकेशाय नमः । महासेनजनकाय नमः । चारुविक्रमाय नमः । रुद्राय नमः । भूतपतये नमः । स्थाणवे नमः।

अहिर्बुध्न्याय नमः । दिगम्बराय नमः । अष्टमूर्तये नमः । अनेकात्मने नमः । सात्विकाय नमः । शुद्धविग्रहाय नमः । शाश्वताय नमः । खण्डपरशवे नमः । अजाय नमः । पाशविमोचकाय नमः । मृडाय नमः । पशुपतये नमः । देवाय नमः । महादेवाय नमः । अव्ययाय नमः । हरये नमः । पूषदन्तभिदे नमः । अव्यग्राय नमः । दक्षाध्वरहराय नमः । हराय नमः । भगनेत्रभिदे नमः । अव्यक्ताय नमः । सहस्राक्षाय नमः । सहस्रपदे नमः । अपवर्गप्रदाय नमः । अनन्ताय नमः । तारकाय नमः । परमेश्वराय नमः ॥

इति श्री शिवाष्टोत्तर शतनाम पूजास्समर्पयामि ॥

केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः । विष्णवे नमः । मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः। श्रीधराय नमः। हृषीकेशाय नमः। पद्मनाभाय नमः। दामोदराय नमः । सङ्कर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः । पुरुषोत्तमाय नमः । अधोक्षजाय नमः । नारसिंहाय नमः । अच्युताय नमः । जनार्दनाय नमः । उपेन्द्राय नमः। हरये नमः । श्रीकृष्णाय नमः ॥

सुमुखाय नमः । एकदन्ताय नमः । कपिलाय नमः । गजकर्णकाय नमः । लम्बोदराय नमः । विकटाय नमः । विघ्नराजाय नमः । गणाधिपाय नमः । धूमकेतवे नमः । गणाध्यक्षाय नमः । फालचन्द्राय नमः । गजाननाय नमः ॥

ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः। वाराह्यै नमः । इन्द्राण्यै नमः । चामुण्डायै नमः । श्री महाकाल्यै नमः । श्री महालक्ष्म्यै नमः । श्री महासरस्वत्यै नमः ॥

मित्राय नमः । रवये नमः । सूर्याय नमः । भानवे नमः । खगाय नमः । पूष्णे नमः । हिरण्यगर्भाय नमः । मरीचये नमः । आदित्याय नमः । सवित्रे नमः । अर्काय नमः । भास्कराय नमः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, नामपूजा-स्समर्पयामि ॥

यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ।

मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ॥

श्री साम्बसदाशिव पञ्चायतन देवताभ्यो नमः, धूपमाघ्रापयामि॥

ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः । पद्भ्याँ शूद्रो अजायत ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, दीपं दर्शयामि ॥

धूपदीपानन्तरं आचमनीयं समर्पयामि । आचमनानन्तरं दिव्य परिमलपत्रपुष्पाणि समर्पयामि ॥

गायत्र्या भक्ष्य-भोज्य-फल-ताम्बूलादीन् सम्प्रोक्ष्य, सत्यं त्वर्तेन परिषिञ्चामि । (ऋतं त्वा सत्येन परिषिञ्चामि इति सायं) कामधेनो स्मरामि । (धेनुमुद्रां प्रदर्श्य ।) अमृतमस्तु । अमृतोपस्तरणमसि । ओं प्राणाय स्वाहा । ओं अपानाय स्वाहा । ओं व्यानाय स्वाहा । ओं उदानाय स्वाहा । ओं समानाय स्वाहा । ओं ब्रह्मणे स्वाहा ॥

चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, यथा विहित नैवेद्यं निवेदयामि ॥ मध्ये मध्ये स्वादूदकं समर्पयामि । अमृतापिधानमसि । उत्तरापोशनं समर्पयामि । हस्तप्रक्षालनं समर्पयामि । पादप्रक्षालनं समर्पयामि । पुनराचमनीयं समर्पयामि ॥

बाणरावणचण्डीश नन्दिभृङ्गिरिटादयः ।
महादेवप्रसादोऽयं सर्वे गृह्णन्तु शाम्भवाः ॥

शक्तिरुच्छिष्ठचाण्डाली सोमसूर्याग्निलोचने ।
महादेव्याः प्रसादोऽयं सर्वा गृह्णन्तु मातरः ॥

बलिर्विभीषणो भीष्मः कपिलो नारदोऽर्जुनः ।
प्रह्लादश्चाम्बरीषश्च हनूमच्छुकशौनकाः ।
महाविष्णुप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥

घण्टाकर्णविरूपाक्ष कुम्भोदरमहोदराः ।
विघ्नेश्वरप्रसादोऽयं सर्वे गृह्णन्तु वैघ्नकाः ॥

बलिहरणदेवताभ्यो नमः बलिं हरामि ॥

नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौस्समवर्तत ।
पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, पूगीफल ताम्बूलं निवेदयामि ॥

सोमो वा एतस्य राज्यमादत्ते । यो राजा सन् राज्यो वा सोमेन यजते । देवसुवामेतानि हवीँ षि भवन्ति । एतावन्तो वै देवानाँ सवाः । त एवास्मै सवान् प्रयच्छन्ति । त एनं पुनस्सुवन्ते राज्याय । देवसू राजा भवति ॥

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाभिवदन्, यदास्ते ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, वेदोक्तमङ्गल-नीराजनं दर्शयामि ॥

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥

गौरीमिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद् विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

आसत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवना विपश्यन् ॥

राजाधिराजाय प्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे । समे कामान्काम कामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः ॥

पर्याप्त्या अनन्तरायाय सर्वस्तोमोति रात्र उत्तममहर्भवति सर्वस्याप्त्यै सर्वस्यजित्त्यै सर्वमेव तेनाप्नोति सर्वं जयति ॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः, वेदोक्त मन्त्रपुष्पं समर्पयामि ॥

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवेभवेनातिभवे भवस्व माम् । भवोद्भवाय नमः ॥

वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥

ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं

जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमँ हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः प्रदक्षिणनमस्कारान् समर्पयामि ॥

प्रसन्नार्घ्यं करिष्ये ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥

कात्यायनाय विद्महे कन्यकुमारि धीमहि ।
तन्नो दुर्गिः प्रचोदयात् ॥

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ।
तन्नो दन्तिः प्रचोदयात् ॥

नारायणाय विद्महे वासुदेवाय धीमहि ।
तन्नो विष्णुः प्रचोदयात् ॥

महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ।।

भास्कराय विद्महे महद्द्युतिकराय धीमहि ।
तन्नो आदित्यः प्रचोदयात् ।।

श्री साम्बसदाशिवपञ्चायतन देवताभ्यो नमः प्रसन्नार्घ्यं समर्पयामि ।।

## प्रार्थना

अनायासेन मरणं विना दैन्येन जीवनम् ।
देहि मे कृपया शम्भो त्वयि भक्तिमचञ्चलाम् ।।

ऋणरोगादि दारिद्र्यपापक्षुदपमृत्यवः ।
भयशोकमनस्तापाः नश्यन्तु मम सर्वदा ।।

नमो देवि महाविद्ये नमामि चरणौ तव ।
सदा ज्ञानप्रकाशं मे देहि सर्वार्थदे शिवे ।।

मनोरथान् प्रार्थयामि ।।

पुनः पूजां करिष्ये । छत्रं धारयामि । चामरे वीजयामि । गीतं श्रावयामि । नाट्यं दर्शयामि । वाद्यं श्रावयामि । अश्वमारोपयामि । गजमारोपयामि । आन्दोलिकामारोपयामि । समस्त राजोपचार, देवोपचार पूजाः समर्पयामि ।।

यस्य स्मृत्या च नामोक्त्या तपः पूजा क्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥

अनेन मया कृत ध्यानावाहनादि पूजनेन भगवन्तः सर्वात्मकाः श्री साम्बसदाशिवपञ्चायतन देवताः सुप्रीताः सुप्रसन्नाः वरदाः भवन्तु ॥

पूजाकाले मध्ये मन्त्र-तन्त्र-स्वर-वर्ण-न्यूनातिरिक्त लोपदोष-प्रायाश्चित्तार्थं नामत्रय महामन्त्रजपं करिष्ये ॥ अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः । (त्रिवारम् ।) अच्युतानन्त-गोविन्देभ्यो नमः ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोयं शिवाभिमर्शनः ॥

इति प्रसादं स्वीकृत्य

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै
महेश्वरायेति समर्पयामि ॥

अपराध सहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोयमिति मां मत्वा क्षमस्व परमेश्वर ॥

॥ ओं तत्सत् ब्रह्मार्पणमस्तु ॥

# अनुबन्धः

॥ अभिषेकोपयुक्तः महानारायणोपनिषद्भागः ॥

ओं सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ओं शान्तिः शान्तिः शान्तिः ॥

अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् । सप्त प्राणाः प्रभवन्ति तस्मात्थ्सप्तार्चिषस्समिधस्सप्त जिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया-न्निहितास्सप्त सप्त । अतस्समुद्रा गिरयश्च सर्वेऽस्मात्थ्स्यन्दन्ते सिन्धवस्सर्वरूपाः । अतश्च विश्वा ओषधयो रसाच्च येनैष भूतस्तिष्ठत्यन्तरात्मा । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृद्ध्राणा ँ स्वधितिर्वनाना ँ सोमः पवित्रमत्येति रेभन्न् । अजामेकां लोहित-शुक्लकृष्णां बह्वीं प्रजां जनयन्ती ँ सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः । ह ँ सश्शुचि-षद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्यो-मसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् । घृतं मिमिक्षिरे घृतमस्य

योनिर्घृते श्रितो घृतमुवस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् । समुद्रादूर्मिर्मधुमाँ उदारदुपाँ शुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनास्मिन्, यज्ञे धारयामा नमोभिः । उप ब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश । त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् । इन्द्र एकँ सूर्य एकं जजानवेनादेकँ स्वधया निष्टतक्षुः ॥ यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानँ सनो देवश्शुभया स्मृत्या संयुनक्तु । यस्मात्परं नापरमस्ति किञ्चिद्यस्मा-न्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्ते-नेदं पूर्णं पुरुषेण सर्वम् । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति । वेदान्तविज्ञान सुनिश्चितार्थास्संन्यास-योगाद्यतयश्शुद्ध-सत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृता-त्परिमुच्यन्ति सर्वे । दहं विपापं परमेऽश्मभूतं यत्पुण्डरीकं पुरमध्यसँस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् । यो वेदादौ स्वरः

प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ।

सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमान्नित्यं विश्वं नारायणँ हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वरँ शाश्वतँ शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । नारायण परो ज्योतिरात्मा नारायणः परः । नारायण परं ब्रह्म तत्त्वं नारायणः परः । नारायण परो ध्याता ध्यानं नारायणः परः । यच्च किञ्चिज्जगथ्सर्वं दृश्यते श्रूयतेऽपिवा । अन्तर्बहिश्च तथ्सर्वं व्याप्य नारायणस्स्थितः । अनन्त- मव्ययं कविँ समुद्रेऽन्तं विश्वशम्भुवम् । पद्मकोश-प्रतीकाशँ हृदयं चाप्यधोमुखम् । अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति । ज्वालमालाकुलं भाती विश्वस्यायतनं महत् । सन्ततँ शिलाभिस्तु लम्बत्याकोशसन्निभम् । तस्यान्ते सुषिरँ सूक्ष्मं तस्मिन्थ्सर्वं प्रतिष्ठितम् । तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतो मुखः। सोऽग्रभुग्विभजन्तिष्ठन्नाहार मजरः कविः । तिर्यगूर्ध्वमधश्शायी रश्मयस्तस्य सन्तता । सन्तापयति स्वं देहमापाद तलमस्तगः । तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । नीलतोयदमध्यस्था-द्विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।

तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्म स शिवस्स हरि स्सेन्द्रस्सोऽक्षरः परमस्स्वराट् ॥

आदित्यो वा एष एतन्मण्डलं तपति तत्रता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकस्सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ॥

आदित्यो वै तेज ओजो बलं यशश्चक्षुश्श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युस्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तथ्सत्यमन्नममृतो जीवो विश्वः कतमस्स्वयम्भु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिर्ब्रह्मणस्सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ॥

निधनपतये नमः। निधनपतान्तिकाय नमः। ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः ।

ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतथ्सोमस्य सूर्यस्य सर्वलिङ्ग ँ स्थापयति पाणिमन्त्रं पवित्रम् ॥

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवेभवेनातिभवे भवस्व माम् । भवोद्भवाय नमः ॥

वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः । ऋत ँ सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः।

सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्सन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमँ हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥

यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै ॥

सहनाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ।

ओं शान्तिः शान्तिः शान्तिः ॥

## नीराजनमन्त्राः

त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय माऽमृतादिति वा वै तदाह । उत्किरन्ति । भगस्य लीप्सन्ते । मूते कृत्वा सजन्ति । यथा जनं यतेऽवसं करोति । तादृगेवतत् । एष ते रुद्र भाग इत्याह निरवत्यै । अप्रतीक्षमायन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ॥

ऐन्द्राग्नमुपसादितम् । सर्वाभ्यो वा एष देवताभ्यो जुहोति । योऽग्निहोत्रं जुहोति । यथा खलु वै धेनुं तीर्थे तर्पयति । एवमग्निहोत्री यजमानं तर्पयति । तृप्यति प्रजया पशुभिः। प्र सुवर्गं लोकं जानाति । पश्यति पुत्रम् । पश्यति पौत्रम् । प्र प्रजया पशुभिर्मिथुनैर्जायते । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥

विराजमेव तैराप्त्वा यजमानोऽवरुन्धे । एकादश दश त आलभ्यन्ते । एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभाः पशवः । पशूनेवावरुन्धे । वैश्वदेवो वा अश्वः । नानादेवत्याः पशवो भवन्ति । अश्वस्य सर्वत्वाय । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः । बहुरूपा भवन्ति । तस्माद्बहुरूपाः पशवस्समृद्ध्यै ॥

तं काले काल आगते यजते । ब्रह्मवादिनो वदन्ति । स त्वा अध्वर्युस्स्यात् । यो यतो यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयतीति । वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातु विदो गातुं वित्वा गातुमितेत्याह । यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ।

साङ्ग्रहण्येष्ट्या यजते । इमां जनता ँ सङ्गृह्णानीति । द्वादशारत्नी रशना भवति । द्वादशमासास्संवथ्सरः । संवथ्सर-

मेवावरुन्धे । मौञ्जी भवति । ऊर्ग्वै मुञ्जाः । ऊर्जमेवावरुन्धे । चित्रा नक्षत्रं भवति । चित्रं वा एतत्कर्म । यदश्वमेधस्समृद्ध्यै ॥

नर्यप्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् । अथर्व पितुं मे गोपाय । रसमन्नमिहायुषे । अदब्धा योऽशीततनो । अविषं नः पितुं कृणु । शँ स्य पशून्मे गोपाय । द्विपादो ये चतुष्पदः । अष्टाशफाश्च य इहाग्ने । ये चैकशफा आशुगा । सप्रथसभां मे गोपाय । ये च सभ्यास्सभासदः । तानिन्द्रियावतः कुरु । सर्वमायुरुपासताम् । अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रै विदा विदुः । ऋचस्सामानि यजूँषि । सा हि श्रीरमृता सताम् ॥

ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति । सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । अग्निर्वा ऋतम् । असावादित्यस्सत्यम् । अग्निमेव तदादित्येन सायं परिषिञ्चति । अग्निनादित्यं प्रातस्सः । यावदहोरात्रे भवतः । तावदस्य लोकस्य । नार्तिर्न रिष्टिः । नान्तो न पर्यन्तोऽस्ति । यस्यैवं विदुषोऽग्निहोत्रं जुह्वति । य उ चैनदेवं वेद ॥

तस्माद्वाजपेययाजी पूतो मेध्यो दक्षिण्यः। प्राङुद्द्रवति सोमग्रहैः । अमुमेव तैर्लोकमभिजयति । प्रत्यङ्स्सुराग्रहैः। इममेव

तैर्लोकमभिजयति । प्रतिष्ठन्ति सोमग्रहैः । यावदेव सत्यम् । तेन सूयते । वाजसृद्भ्यस्सुराग्रहाम् हरन्ति । अनृतेनैव विशꣳ सꣳ सृजति। हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्यो सानीति । एकधा ब्रह्मण उपहरति । एकधैव यजमान आयुस्तेजो दधाति ॥

बहुग्वै बह्वश्वायै बह्वजाविकायै । बहुव्रीहि यवायै बहुमाष-तिलायै । बहुहिरण्यायै बहुहस्तिकायै । बहुदासपूरुषायै रयिमत्त्यै पुष्टिमत्यै । बहुरायस्पोषायै राजाऽस्तु ॥

## मन्त्रपुष्पम्

योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । अग्निर्वा अपामायतनम् । आयतनवान् भवति । योऽग्नेरायतनं वेद । आयतनवान् भवति । आपो वा अग्नेरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । वायुर्वा अपामायतनम् । आयतनवान् भवति । यो वायोरायतनं वेद । आयतनवान् भवति । आपो वै वायोरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । असौ वै तपन्नपामायतनम्।

आयतनवान् भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति । आपो वा अमुष्य तपत आयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । चन्द्रमा वा अपामायतनम् । आयतनवान् भवति । यश्चन्द्रमस आयतनं वेद । आयतनवान् भवति । आपो वै चन्द्रमस आयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । नक्षत्राणि वा अपामायतनम् । आयतनवान् भवति । यो नक्षत्राणामायतनं वेद । आयतनवान् भवति । आपो वै नक्षत्राणामायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । पर्जन्यो वा अपामायतनम् । आयतनवान् भवति । यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति । आपो वै पर्जन्यस्याऽऽयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । संवथ्सरो वा अपामायतनम् । आयतनवान् भवति । यस्संवथ्सरस्यायतनं वेद । आयतनवान् भवति । आपो वै संवथ्सरस्यायतनम् । आयतनवान् भवति । य एवं वेद । योऽफ्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ॥

ओं शान्तिः शान्तिः शान्तिः ॥

# श्री देवीसूक्तम्

ओं अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगम् । अहं दधामि द्रविणं हविष्मते सुप्राव्ये (ए) ३ यजमानाय सुन्वते ॥ अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम् ॥ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । अमन्तवो मां त उप क्षियन्ति श्रुधिश्रुत श्रद्धिवं ते वदामि ॥ अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावा पृथिवी आविवेश ॥ अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्व (अ) १ न्तः समुद्रे । ततो वितिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा । परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव ॥

ओं शान्तिः शान्तिः शान्तिः ॥

# भाग्यसूक्तम्

प्रातरग्निं प्रातरिन्द्रग्ं हवामहे प्रातर्मित्रा वरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातस्सोममुत रुद्रग्ं हुवेम ।। प्रातर्जितं भगमुग्रग्ं हुवेम वयं पुत्रमदितेर्यो विधर्ता । आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ।। भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवददन्नः । भगप्रणो जनय गोभिरश्वैर्भगप्रनृभिर्नृवन्तस्स्याम ।। उतेदानीं भगवन्तस्स्यामोत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन्थ्सूर्यस्य वयं देवानाग्ं सुमतौ स्याम ।। भग एव भगवाग्ं अस्तु देवास्तेन वयं भगवन्तस्स्याम । तं त्वा भग सर्व इज्जोहवीमि सनो भग पुर एता भवेह ।। समध्वरायोषसोऽनमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगन्नो रथमिवाश्वा वाजिन आवहन्तु ।। अश्वावतीर्गोमतीर्न उषासो वीरवतीस्सदमुच्छन्तु भद्राः । घृतं दुहाना विश्वतः प्रपीनायूयं पात स्वस्तिभिस्सदा नः ।। यो माऽग्ने भागिनग्ं सन्तमथाभागं चिकीर्त्रूषति । अभागमग्ने तं कुरु मामग्ने भागिनं कुरु ।।

ओं शान्तिः शान्तिः शान्तिः ।।

# श्री ललिताष्टोत्तरशतनामावलिः

ओं ॥ भूरूपसकलाधारायै नमः। बीजौषध्यन्नरूपिण्यै नमः। जरायुजाण्डजोद्भिज्जस्वेदजादिशरीरिण्यै नमः। क्षेत्ररूपायै नमः। तीर्थरूपायै नमः। गिरिकाननरूपिण्यै नमः। जलरूपाखिलाप्यायायै नमः। तेजःपुञ्जस्वरूपिण्यै नमः। जगत्प्रकाशिकायै नमः। अज्ञान-तमोहृद्भानुरूपिण्यै नमः। वायुरूपायै नमः। अखिलव्याप्तायै नमः। उत्पत्त्यादिविधायिन्यै नमः। नभोरूपायै नमः। इन्दुसूर्यादिज्योति-र्भूतावकाशदायै नमः। घ्राणरूपायै नमः। गन्धरूपायै नमः। गन्ध-ग्रहणकारिण्यै नमः। रसनायै नमः। रसरूपायै नमः। रसग्रहणकारिण्यै नमः। चक्षूरूपायै नमः। रूपरूपायै नमः। रूपग्रहणकारिण्यै नमः। त्वग्रूपायै नमः। स्पर्शरूपायै नमः। स्पर्शग्रहणकारिण्यै नमः। श्रोत्र-रूपायै नमः। शब्दरूपायै नमः। शब्दग्रहणकारिण्यै नमः। वागिन्द्रिय-स्वरूपायै नमः। वाचावृत्तिप्रदायिन्यै नमः। पाणीन्द्रियस्वरूपायै नमः। क्रियावृत्तिप्रदायिन्यै नमः। पादेन्द्रियस्वरूपायै नमः। गतिवृत्तिप्रदायिन्यै नमः। पाय्विन्द्रियस्वरूपायै नमः। विसर्गार्थैककारिण्यै नमः। रहस्येन्द्रियरूपायै नमः। विषयानन्ददायिन्यै नमः। मनोरूपायै नमः। सङ्कल्पविकल्पादिस्वरूपिण्यै नमः। सर्वोपलब्धिहेतवे नमः। बुद्धि-निश्चयरूपिण्यै नमः। अहङ्कारस्वरूपायै नमः। अहङ्कर्तव्यवृत्तिदायै नमः। चेतनाचित्तरूपायै नमः। सर्वचैतन्यदायिन्यै नमः। गुणवैषम्य-रूपाढ्यमहत्तत्त्वाभिमानिन्यै नमः। गुणसाम्याव्यक्तमायामूलप्रकृति-सञ्ज्ञिकायै नमः। पञ्चीकृतमहाभूतसूक्ष्मभूतस्वरूपिण्यै नमः। विद्याऽ-विद्यात्मिकायै नमः। मायाबन्धमोचनकारिण्यै नमः। ईश्वरेच्छाराग-रूपायै नमः। प्रकृतिक्षोभकारिण्यै नमः। कालशक्त्यै नमः। काल-रूपायै नमः। नियत्यादिनियामिकायै नमः। धूम्रादिपञ्चव्योमाख्यायै

नमः। यन्त्रमन्त्रकलात्मिकायै नमः। ब्रह्मरूपायै नमः। विष्णुरूपायै नमः। रुद्ररूपायै नमः। महेश्वर्यै नमः। सदाशिवस्वरूपायै नमः। सर्वजीवमय्यै नमः। शिवायै नमः। श्रीवाणीलक्ष्म्युमारूपायै नमः। सदाख्यायै नमः। चित्कलात्मिकायै नमः। प्राज्ञतैजसविश्वाख्य-विराट्सूत्रेश्वरात्मिकायै नमः। स्थूलदेहस्वरूपायै नमः। सूक्ष्मदेह-स्वरूपिण्यै नमः। वाच्यवाचकरूपायै नमः। ज्ञानज्ञेयस्वरूपिण्यै नमः। कार्यकारणरूपायै नमः। तत्तत्तत्त्वाधिदेवतायै नमः। दशनादस्वरूपायै नमः। नाडीरूपाढ्यकुण्डल्यै नमः। अकारादिक्षकारान्तवैखरी-वाक्स्वरूपिण्यै नमः। वेदवेदाङ्गरूपायै नमः। सूत्रशास्त्रादिरूपिण्यै नमः। पुराणरूपायै नमः। सद्धर्मशास्त्ररूपायै नमः। परात्परस्यै नमः। आयुर्वेदस्वरूपायै नमः। धनुर्वेदस्वरूपिण्यै नमः। गान्धर्वविद्यारूपायै नमः। अर्थशास्त्रादिरूपिण्यै नमः। चतुष्षष्टिकलारूपायै नमः। निगमागमरूपिण्यै नमः। काव्येतिहासरूपायै नमः। गानविद्यादि-रूपिण्यै नमः। पदवाक्यस्वरूपायै नमः। सर्वभाषास्वरूपिण्यै नमः। पदवाक्यस्फोटरूपायै नमः। ज्ञानज्ञेयक्रियात्मिकायै नमः। सर्वतन्त्र-मय्यै नमः। सर्वयन्त्रतन्त्रादिरूपिण्यै नमः। वेदमात्रे नमः। ललितायै नमः। महाव्याहृतिरूपिण्यै नमः। अव्याकृतपदानाद्यचिन्त्यशक्त्यै नमः। तमोमय्यै नमः। परस्मैज्योतिषे नमः। परब्रह्मसाक्षात्कार-स्वरूपिण्यै नमः। परब्रह्ममय्यै नमः। सत्यासत्यज्ञानसुधात्मिकायै नमः॥

# श्री गणपति–अष्टोत्तरशतनामावलिः

ओं ।। विघ्नेश्वराय नमः। विघ्नराजाय नमः। गौरीपुत्राय नमः। विनायकाय नमः। स्कन्दाग्रजाय नमः। अव्ययाय नमः। पूताय नमः। गणाध्यक्षाय नमः। द्विजप्रियाय नमः। अग्निगर्भाय नमः। इन्द्रश्रीप्रदाय नमः। वाणीप्रदाय नमः। सर्वसिद्धिप्रदाय नमः। शर्वतनयाय नमः। शर्वरीप्रियाय नमः। सर्वात्मकाय नमः। सृष्टिकर्त्रे नमः। देवानी-कार्चिताय नमः। शिवाय नमः। शुद्धबुद्धिप्रदाय नमः। शान्ताय नमः। ब्रह्मचारिणे नमः। गजाननाय नमः। द्वैमातुराय नमः। मुनिस्तुत्याय नमः। भक्तविघ्नविनाशिने नमः। एकदन्ताय नमः। चतुर्बाहवे नमः। चतुराय नमः। शक्तिसंयुताय नमः। लम्बोदराय नमः। शूर्पकर्णाय नमः। हेरम्बाय नमः। ब्रह्मवित्तमाय नमः। कालाय नमः। गृहपतये नमः। कामिने नमः। सोमसूर्याग्निलोचनाय नमः। पाशाङ्कुशधराय नमः। चण्डाय नमः। गुणातीताय नमः। निरञ्जनाय नमः। अकल्मषाय नमः। स्वयंसिद्धाय नमः। सिद्धार्चितपदाम्बुजाय नमः। बीजापूरकराय नमः। अव्यक्ताय नमः। वरदाय नमः। शाश्वताय नमः। कवये नमः। विद्वत्तमाय नमः। वीतभयाय नमः। गदाचक्रेक्षुचापधृते नमः। उत्पलाब्जकराय नमः। श्रीशाय नमः। श्रीपतये नमः। स्तुतिहर्षिताय नमः। कुलाद्रिभेत्रे नमः। जटिलाय नमः। चन्द्रचूडाय नमः। महेश्वराय नमः। नागयज्ञोपवीतिने नमः। श्रीकण्ठाय नमः। नागार्चिताय नमः। व्रतिने नमः। स्थूलकण्ठाय नमः। त्रयीकर्त्रे नमः। सामघोषप्रियाय नमः। परस्मै नमः। स्तूलदन्ताय नमः। अग्रण्यै नमः। धीराय नमः। ग्रामण्यै नमः। गणेशाय नमः। स्थिराय नमः। सुवृद्धये नमः। सुभगाय नमः। शूराय नमः। वागीशाय नमः। सिद्धिदायकाय नमः।

दूर्वाबिल्वप्रियाय नमः। कान्ताय नमः। पापहारिणे नमः। समाश्रिताय नमः। आश्रितश्रीप्रदाय नमः। सौम्याय नमः। भक्तकाङ्क्षितदायकाय नमः। सिन्दूरारुणविग्रहाय नमः। अच्युताय नमः। ऐक्ष्वाम्बोधिमध्यस्थाय नमः। केवलाय नमः। सिद्धाय नमः। सच्चिदानन्दविग्रहाय नमः। ज्ञानिने नमः। मायायुताय नमः। अदम्भाय नमः। ब्रह्मिष्ठाय नमः। भयवर्जिताय नमः। समस्तजगदाधाराय नमः। व्योममूर्तये नमः। अमूर्तिमते नमः। पार्वतीशङ्करोत्सङ्गखेलनोत्सुकमानसाय नमः। समस्तजगदात्मने नमः। वरदाय नमः। आखुवाहनाय नमः। हृष्टचित्ताय नमः। सर्वात्मने नमः। सर्वसिद्धिप्रदायकाय नमः॥

## श्री कृष्णाष्टोत्तरशतनामावलिः

ओं ॥ श्रीकृष्णाय नमः। कमलानाथाय नमः। वासुदेवाय नमः। सनातनाय नमः। वसुदेवात्मजाय नमः। पुण्याय नमः। लीलामानुषविग्रहाय नमः। श्रीवत्सकौस्तुभधराय नमः। यशोदावत्सलाय नमः। हरये नमः। चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधाय नमः। देवकीनन्दनाय नमः। श्रीशाय नमः। नन्दगोपप्रियात्मजाय नमः। यमुनावेगसंहारिणे नमः। बलभद्रप्रियानुजाय नमः। पूतनाजीवितहराय नमः। शकटासुरभञ्जनाय नमः। नन्दव्रजजनानन्दिने नमः। सच्चिदानन्दविग्रहाय नमः। नवनीतविलिप्ताङ्गाय नमः। नवनीतनटाय नमः। अनघाय नमः। नवनीतनवाहारिणे नमः। मुचुकुन्दप्रसादकाय नमः। षोडशस्त्रीसहस्रेशाय नमः। त्रिभङ्गिने नमः। मधुराकृतये नमः। शुकवागमृताब्धीन्दवे नमः। गोविन्दाय नमः। गोविदांपतये नमः। वत्सवाटीचराय नमः। अनन्ताय नमः। धेनुकासुरभञ्जनाय नमः। तृणीकृत तृणावर्ताय नमः। यमलार्जुनभञ्जनाय नमः। उत्तानतालभेत्त्रे

नमः। तमालश्यामलाकृतये नमः। गोपगोपीश्वराय नमः। योगिने नमः। कोटिसूर्यसमप्रभाय नमः। इलापतये नमः। परस्मैज्योतिषे नमः। यादवेन्द्राय नमः। यदूद्वहाय नमः। वनमालिने नमः। पीतवाससे नमः। पारिजातापहारकाय नमः। गोवर्धनाचलोद्धर्त्रे नमः। गोपालाय नमः। सर्वपालकाय नमः। अजाय नमः। निरञ्जनाय नमः। कामजनकाय नमः। कञ्जलोचनाय नमः। मधुघ्ने नमः। मधुरानाथाय नमः। द्वारकानायकाय नमः। बलिने नमः। बृन्दावनान्तसञ्चारिणे नमः। तुलसीदामभूषणाय नमः। स्यमन्तकमणेर्हर्त्रे नमः। नरनारायणात्मकाय नमः। कुब्जाकृष्णाम्बरधराय नमः। मायिने नमः। परमपूरुषाय नमः। मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय नमः। संसारवैरिणे नमः। कंसारये नमः। मुरारये नमः। नरकान्तकाय नमः। अनादिब्रह्मचारिणे नमः। कृष्णाव्यसनकर्षकाय नमः। शिशुपालशिरश्छेत्रे नमः। दुर्योधनकुलान्तकाय नमः। विदुराक्रूरवरदाय नमः। विश्वरूपप्रदर्शकाय नमः। सत्यवाचे नमः। सत्यसङ्कल्पाय नमः। सत्यभामारताय नमः। जयिने नमः। सुभद्रापूर्वजाय नमः। जिष्णवे नमः। भीष्ममुक्तिप्रदायकाय नमः। जगद्गुरवे नमः। जगन्नाथाय नमः। वेणुनादविशारदाय नमः। वृषभासुरविध्वंसिने नमः। बाणासुरकरान्तकाय नमः। युधिष्ठिरप्रतिष्ठात्रे नमः। बर्हिबर्हावतंसकाय नमः। पार्थसारथये नमः। अव्यक्तगीतामृतमहोदधये नमः। कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजाय नमः। दामोदराय नमः। यज्ञभोक्त्रे नमः। दानवेन्द्रविनाशनाय नमः। नारायणाय नमः। परस्मै ब्रह्मणे नमः। पन्नगाशनवाहनाय नमः। जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नमः। पुण्यश्लोकाय नमः। तीर्थकराय नमः। वेदवेद्याय नमः। दयानिधये नमः। सर्वतीर्थात्मकाय नमः। सर्वग्रहरूपिणे नमः। परात्परस्मै नमः।

# श्री लक्ष्म्यष्टोत्तरशतनामावलिः

ओं ॥ प्रकृत्यै नमः। विकृत्यै नमः। विद्यायै नमः। सर्वभूतहित-प्रदायै नमः। श्रद्धायै नमः। विभूत्यै नमः। सुरभ्यै नमः। परमात्मिकायै नमः। वाचे नमः। पद्मालयायै नमः। पद्मायै नमः। शुचये नमः। स्वाहा नमः। स्वधा नमः। सुधायै नमः। धन्यायै नमः। हिरण्मय्यै नमः। लक्ष्म्यै नमः। नित्यपुष्टायै नमः। विभावर्यै नमः। अदित्यै नमः। दित्यै नमः। दीप्तायै नमः। वसुधायै नमः। वसुधारिण्यै नमः। कमलायै नमः। कान्तायै नमः। कामाक्ष्यै नमः। क्रोधसम्भवायै नमः। अनुग्रह-पदायै नमः। बुद्ध्यै नमः। अनघायै नमः। हरिवल्लभायै नमः। अशोकायै नमः। अमृतायै नमः। दीप्तायै नमः। लोकशोकविनाशिन्यै नमः। धर्मनिलयायै नमः। करुणायै नमः। लोकमात्रे नमः। पद्मप्रियायै नमः। पद्महस्तायै नमः। पद्माक्ष्यै नमः। पद्मसुन्दर्यै नमः। पद्मोद्भवायै नमः। पद्ममुख्यै नमः। पद्मनाभप्रियायै नमः। रमायै नमः। पद्ममाला-धरायै नमः। देव्यै नमः। पद्मिन्यै नमः। पद्मगन्धिन्यै नमः। पुण्यगन्धायै नमः। सुप्रसन्नायै नमः। प्रसादाभिमुख्यै नमः। प्रभायै नमः। चन्द्र-वदनायै नमः। चन्द्रायै नमः। चन्द्रसहोदर्यै नमः। चतुर्भुजायै नमः। चन्द्ररूपायै नमः। इन्दिरायै नमः। इन्दुशीतलायै नमः। आह्लादजनन्यै नमः। पुष्ट्यै नमः। शिवायै नमः। शिवकर्यै नमः। सत्यै नमः। विमलायै नमः। विश्वजनन्यै नमः। तुष्ट्यै नमः। दारिद्र्यनाशिन्यै नमः। पीतपुष्करिण्यै नमः। शान्तायै नमः। शुक्लमाल्याम्बरायै नमः। श्रियै नमः। भास्कर्यै नमः। बिल्वनिलयायै नमः। वरारोहायै नमः। यशस्विन्यै नमः। वसुन्धरायै नमः। उदाराङ्गायै नमः। हरिण्यै नमः। हेममालिन्यै नमः। धनधान्यकर्यै नमः। सिद्ध्यै नमः। स्त्रैणसौम्यायै

नमः। शुभप्रदायै नमः। नृपवेश्मगतानन्दायै नमः। वरलक्ष्म्यै नमः। वसुप्रदायै नमः। शुभायै नमः। हिरण्यप्राकारायै नमः। समुद्रतनयायै नमः। जयायै नमः। मङ्गलायै देव्यै नमः। विष्णुवक्षस्थलस्थितायै नमः। विष्णुपत्न्यै नमः। प्रसन्नाक्ष्यै नमः। नारायणसमाश्रितायै नमः। दारिद्र्यध्वंसिन्यै नमः। देव्यै नमः। सर्वोपद्रववारिण्यै नमः। नवदुर्गायै नमः। महाकाल्यै नमः। ब्रह्मविष्णुशिवात्मिकायै नमः। त्रिकालज्ञान-सम्पन्नायै नमः। भुवनेश्वर्यै नमः।।

## श्री सूर्याष्टोत्तरशतनामावलिः

ओं ।। सूर्याय नमः। अर्यम्णे नमः। भगाय नमः। त्वष्ट्रे नमः। पूष्णे नमः। अर्काय नमः। सवित्रे नमः। रवये नमः। गभस्तिमते नमः। अजाय नमः। कालाय नमः। मृत्यवे नमः। धात्रे नमः। प्रभाकराय नमः। पृथिव्यै नमः। अद्भ्यो नमः। तेजसे नमः। खाय नमः। वायवे नमः। परायणाय नमः। सोमाय नमः। बृहस्पतये नमः। शुक्राय नमः। बुधाय नमः। अङ्गारकाय नमः। इन्द्राय नमः। विवस्वते नमः। दीप्तांशवे नमः। शुचये नमः। शौरये नमः। शनैश्चराय नमः। ब्रह्मणे नमः। विष्णवे नमः। रुद्राय नमः। स्कन्दाय नमः। वरुणाय नमः। यमाय नमः। वैद्युताय नमः। जाठरायाग्नये नमः। ऐन्धनाय नमः। तेजसांपतये नमः। धर्मध्वजाय नमः। वेदकर्त्रे नमः। वेदाङ्गाय नमः। वेदवाहनाय नमः। कृताय नमः। त्रेताय नमः। द्वापराय नमः। कलये सर्वमलाश्रयाय नमः। कलायै नमः। काष्ठायै नमः। मुहूर्तेभ्यो नमः। क्षपायै नमः। यामाय नमः। क्षणाय नमः। संवत्सरकरायाश्वत्थाय नमः। कालचक्राय विभावसवे नमः। पुरुषाय नमः। शाश्वताय नमः। योगिने नमः। व्यक्ताव्यक्ताय नमः। सनातनाय नमः। कालाध्यक्षाय

नमः। प्रजाध्यक्षाय नमः। विश्वकर्मणे नमः। तमोनुदाय नमः। वरुणाय नमः। सागराय नमः। अंशाय नमः। जीमूताय नमः। जीवनाय नमः। अरिघ्ने नमः। भूताश्रयाय नमः। भूतपतये नमः। सर्वलोकनमस्कृताय नमः। स्रष्ट्रे नमः। संवर्तकाय वह्नये नमः। सर्वस्यादये नमः। अलोलुपाय नमः। अनन्ताय नमः। कपिलाय नमः। भानवे नमः। कामदाय नमः। सर्वतोमुखाय नमः। जयाय नमः। विशालाय नमः। वरदाय नमः। सर्वधातुनिषेवित्रे नमः। मनस्सुपर्णाय नमः। भूतादये नमः। शीघ्रगाय नमः। प्राणधारणाय नमः। धन्वन्तरये नमः। धूमकेतवे नमः। आदिदेवायादितेस्सुताय नमः। द्वादशात्मने नमः। अरविन्दाक्षाय नमः। पित्रेमात्रे पितामहाय नमः। स्वर्गद्वाराय प्रजाद्वाराय नमः। मोक्षद्वाराय त्रिविष्टपाय नमः। देहकर्त्रे नमः। प्रशान्तात्मने नमः। विश्वात्मने नमः। विश्वतोमुखाय नमः। चराचरात्मने नमः। सूक्ष्मात्मने नमः। मैत्रेयाय नमः। करुणान्विताय नमः।।



# लघु-पूजा-पद्धतिः

## आचमनम्

### प्रार्थना

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुस्साक्षात् परंब्रह्म तस्मै श्री गुरवे नमः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

## घण्टानादः

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुर्वे घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥

## आसनविधिः

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया ॥

अपक्रामन्तु भूतानि पिशाचास्सर्वतोमुखम् ।
सर्वेषामविरोधेन पूजाकर्म समारभे ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

## प्राणायामः

प्रणवस्य परब्रह्म ऋषिः, परमात्मा देवता, दैवी गायत्री छन्दः, प्राणायामे विनियोगः।

ओं भूः । ओं भुवः । ओगं सुवः । ओं महः । ओं जनः । ओं तपः । ओगं सत्यम् । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ओमापोज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्सुवरोम् ॥

## सङ्कल्पः

मम-उपात्त-समस्त-दुरित-क्षय-द्वारा श्री परमेश्वर-प्रीत्यर्थं, अस्माकं सहकुटुंबानां क्षेम-स्थैर्य-वीर्य-विजय-अभय-आनन्द-आयुः-आरोग्य-ऐश्वर्य-अभिवृद्ध्यर्थं, धर्म-अर्थ-काम-मोक्ष चतुर्विधफल-पुरुषार्थ सिद्ध्यर्थं, श्री साम्बसदाशिवपञ्चायतन देवता-प्रसाद-सिद्ध्यर्थं यावच्छक्ति-ध्यान-आवाहनादि षोडशोपचार-पूजां करिष्ये।

## कलशार्चनम्

कलशं गन्ध-अक्षत-पत्र-पुष्पैः अभ्यर्च्य, कलशं स्पृष्ट्वा,

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणास्स्मृताः ॥

कुक्षौ तु सागरास्सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥

अङ्गैश्च सहितास्सर्वे कलशाम्बुसमाश्रिताः ।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥

सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

## शङ्खपूजा

कलशोदकेन शङ्खं, प्रक्षाल्य, गायत्र्या शङ्खमापूर्य, शङ्खं गन्ध-अक्षत-पत्र-पुष्पैः अभ्यर्च्य, शङ्ख स्पृष्ट्वा–

शङ्खं चन्द्रार्कदैवत्यं वारुणं चाधिदैवतम् ।
पृष्ठे प्रजापतिस्तत्र अग्रे गङ्गा सरस्वती ॥

त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे तिष्ठन्ति विप्रेन्द्र तस्मात् शङ्खं प्रपूजयेत् ॥

शङ्खमध्यस्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ॥

पाञ्चजन्याय विद्महे विष्णुप्रियाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥

शङ्खोदकं कलशे किञ्चिन्निक्षिप्य, देवस्यार्घ्यं दत्वा, पूजाद्रव्याणि प्रोक्ष्य, आत्मानं प्रोक्ष्य, तच्छेषं विसृज्य, पुनः शङ्खं पूरयित्वा

## आत्मपूजा

देहो देवालयः प्रोक्तो जीवो देवस्सनातनः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥

मण्डपं ध्यात्वा, अथ निर्विघ्नतासिद्ध्यर्थं श्री महागणपति प्रार्थनां करिष्ये–

गणानां त्वा गणपतिँ हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिस्सीद सादनम् ॥

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

ध्यानम्

महादेवं महेशानं महेश्वरमुमापतिम् ।
महासेनगुरुं वन्दे महाभयनिवारणम् ॥

शुद्धस्फटिकसङ्काशं शुद्धविद्याप्रदायकम् ।
शुद्धं सच्चित्सुखानन्दं सदाशिवमहं भजे ॥

ध्यायामि ।

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ॥
आवाहयामि ॥

पुरुष एवेदँ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति ॥
आसनं कल्पयामि ॥

एतावानस्य महिमा । अतोज्यायाँश्च पूरुषः ।
पादोस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ॥
पादारविन्दयोः पाद्यं पाद्यं समर्पयामि ॥

त्रिपादूर्ध्व उदैत्पुरुषः । पादोस्येहा भवात्पुनः ।
ततो विश्वङ्व्यक्रामत् । साशनानशने अभि ॥
हस्तेषु अर्घ्यमर्घ्यं समर्पयामि ॥

तस्माद्विराडजायत । विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ।।

मुखे आचमनीयमाचमनीयं समर्पयामि ।। स्नपयामि—

आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन । महेरणाय चक्षसे । योवः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः । तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ।। दिविश्रयस्वान्तरिक्षे यतस्व पृथिव्या सम्भव ब्रह्मवर्चसमसि ब्रह्मवर्चसायत्वा । अपां ग्रहान् गृह्णाति ।।

(यथाशक्ति पुरुषसूक्तादिभिः अभिषेचनम्)

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवेनाति भवे भवस्व माम् । भवोद्भवाय नमः ।।

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ।।

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ।।

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।।

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

गौरीमिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

यत्पुरुषेण हविषा । देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः ।
शुद्धोदकस्नानं समर्पयामि ॥ स्नानाङ्गमाचमनीयं समर्पयामि ॥

सप्तास्यासन् परिधयः । त्रिस्सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ॥
वस्त्रयुग्मं समर्पयामि ॥

तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ।
तेन देवा अयजन्त । साध्या ऋषयश्च ये ॥
उपवीतं समर्पयामि ॥

हिरण्यपात्रं मधोः पूर्णं ददाति । मधव्योऽसानीति ।
एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति॥
आभरणं समर्पयामि ॥

तस्माद्यज्ञात्सर्वहुतः । सम्भृतं पृषदाज्यम् ।

पशूँस्ताँश्चक्रे वायव्यान् । आरण्यान् ग्राम्याश्च ये ॥

दिव्य-परिमल-गन्धं समर्पयामि ॥

तस्माद्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे ।

छन्दाँसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥

अक्षतान् समर्पयामि ॥

तस्मादश्वा अजायन्त । ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥

पुष्पाणि समर्पयामि ॥

## अथ नाम पूजां करिष्ये—

सद्योजाताय नमः । वामदेवाय नमः । अघोराय नमः । तत्पुरुषाय नमः । ईशानाय नमः ॥

ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । वैष्णव्यै नमः । वाराह्यै नमः । इन्द्राण्यै नमः । चामुण्डायै नमः ॥

केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः । विष्णवे नमः । मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः । हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । सङ्कर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः । पुरुषोत्तमाय नमः । अधोक्षजाय

नमः । नारसिंहाय नमः । अच्युताय नमः । जनार्दनाय नमः । उपेन्द्राय नमः । हरये नमः । श्री कृष्णाय नमः ।।

नामपूजां समर्पयामि ।।

यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ।।

धूपमाघ्रापयामि ।।

ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः । पद्भ्याँ शूद्रो अजायत ।।

दीपं दर्शयामि ।।
धूपदीपानन्तरं आचमनीयं समर्पयामि ।
आचमनीयानन्तरं दिव्य-परिमल-पत्र-पुष्पाणि समर्पयामि ।।

गायत्र्या नैवेद्यं सम्प्रोक्ष्य, प्रातः—सत्यं त्वर्तेन परिषिञ्चामि । रात्रौ—ऋतं त्वा सत्येन परिषिञ्चामि इति प्रोक्ष्य, धेनुमुद्रां प्रदर्श्य, अमृतमस्तु अमृतोपस्तरणमसि । ओं प्राणाय स्वाहा । ओं अपानाय स्वाहा । ओं व्यानाय स्वाहा । ओं उदानाय स्वाहा । ओं समानाय स्वाहा । ओं ब्रह्मणे स्वाहा ।

चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चा-ग्निश्च । प्राणाद्वायुरजायत ।।

यथा—विहित नैवेद्यं निवेदयामि। मध्ये मध्ये स्वादूदकं समर्पयामि। अमृतापिधानमसि। उत्तरापोशानं समर्पयामि। हस्तप्रक्षालनार्थे जलं समर्पयामि। पादप्रक्षालनार्थे जलं समर्पयामि। पुनराचमनीयार्थे जलं समर्पयामि। बलिं हरामि।

नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौस्समवर्तत।
पद्भ्यां भूमिर्दिशश्श्रोत्रात्। तथा लोकाँ अकल्पयन्॥

पूगीफल ताम्बूलं निवेदयामि॥

हिरण्यपात्रं मधोः पूर्णं ददाति। मधव्योऽसानीति।
एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुस्तेजो दधाति॥

वेदाहमेतं पुरुषं महान्तम्।
आदित्यवर्णं तमसस्तु पारे।
सर्वाणि रूपाणि विचित्य धीरः।
नामानि कृत्वाभिवदन् यदास्ते॥

वेदोक्त मङ्गलनीराजनं दर्शयामि॥

धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान् प्रदिशश्चतस्रः।
तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते॥

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।

तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ॥

वेदोक्त मन्त्रपुष्पं समर्पयामि ॥

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥

प्रदक्षिणनमस्कारान् समर्पयामि ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ॥

कात्यायनाय विद्महे कन्यकुमारि धीमहि ।

तन्नो दुर्गिः प्रचोदयात् ॥

प्रसन्नार्घ्यं समर्पयामि ॥

अनायासेन मरणं विना दैन्येन जीवनम् ।
देहि मे कृपया शम्भो त्वयि भक्तिमचञ्चलाम् ॥

ऋणरोगादि दारिद्र्यपापक्षुदपमृत्यवः ।
भयशोकमनस्तापाः नश्यन्तु मम सर्वदा ॥

मनोरथान् प्रार्थयामि ॥

## पुनः पूजां करिष्ये ॥

छत्रं धारयामि । चामरे वीजयामि । गीतं श्रावयामि । नाट्यं दर्शयामि । वाद्यं श्रावयामि । अश्वमारोपयामि । गजमारोपयामि ।

आन्दोलिकामारोपयामि । समस्त राजोपचार-देवोपचार पूजास्समर्पयामि ॥

यस्य स्मृत्या च नामोक्त्या तपः पूजा क्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥

अनेन मया कृत पूजनेन भगवान् सर्वात्मकः श्री साम्बसदाशिवः सुप्रीतः सुप्रसन्नो वरदो भवतु ।

पूजा काले मध्ये मन्त्र-तन्त्र-स्वर-वर्ण-कालातीत-न्यूनातिरिक्त लोपदोषप्रायश्चित्तार्थं नामत्रयमन्त्रजपं करिष्ये ।

अच्युताय नमः-अनन्ताय नमः-गोविन्दाय नमः (त्रिवारम्) अच्युतानन्तगोविन्देभ्यो नमः ॥

अयं मे हस्तो भगवानयं मे भगवत्तरः ।
अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः ॥

इति प्रसाद स्वीकरणम् ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै ।
नारायणायेति समर्पयामि ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोयमिति मां मत्वा क्षमस्व परमेश्वर ॥

ओं तत्सत् ब्रह्मार्पणमस्तु ॥

